पृतना''ऽइति व्युधो वै पृतना व्युधः सहस्वेत्येवैतदाहा''भिमातीरपास्ये''ति सपत्नो वाऽअभिमातिः सपत्नमपजहीत्येवैतदाह ''दुष्टरस्तरन्नराती''रिति दुस्तरो ह्येष रक्षोभिर्नाष्ट्राभिस्तरन्नरातीरिति सर्वꣳ ह्येष पाप्मानं तरति तस्मादाह तरन्नरातीरिति ''वर्चोधा यज्ञवाहसी''ति साधु यजमाने दधदित्येवैतदाह ॥१६॥ तदग्निꣳ समाधाय जुहोति । ''देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामुपाꣳशोर्वीर्येण जुहोमी''ति यज्ञमुखं वाऽउपाꣳशुर्यज्ञमुखेनैवैतन्नाष्ट्रा रक्षाꣳसि हन्ति ''हतꣳ रक्षः स्वाहे''ति तन्नाष्ट्रा रक्षाꣳसि हन्ति ॥१७॥ स यदि पालाशः स्रुवो भवति । ब्रह्म वै पलाशो ब्रह्मणैवैतन्नाष्ट्रा रक्षाꣳसि हन्ति यद्यु वैकङ्कतो वज्रो वै विकङ्कतो वज्रेणैवैतन्नाष्ट्रा रक्षाꣳसि हन्ति ''रक्षसां त्वा वधाये''ति तन्नाष्ट्रा रक्षाꣳसि हन्ति ॥१८॥ स यदि प्राङित्वा जुहोति । प्राञ्चꣳ स्रुवमस्यति यद्युदङित्वा जुहोत्युदञ्चꣳ स्रुवमस्य ''त्यवधिष्म रक्ष'' ऽइति तन्नाष्ट्रा रक्षाꣳसि हन्ति ॥१९॥ अथाप्रतीक्षं पुनरायन्ति । स हैतेनापि प्रतिसरं कुर्वीत स यस्यां ततो दिशि भवति तत्प्रतीत्य जुहोति प्रतीचीनफलो वा ऽअपामार्गः स यो हास्मै तत्र किञ्चित्करोति तमेव तत्प्रत्यग्धूर्वति तस्य नामादिशे ''दवधिष्मामुमसौ हत''ऽइति तन्नाष्ट्रा रक्षाꣳसि हन्ति ॥२०॥ Cf. का. श. ७. १. २; तै. सं. १. ८. ७; तै. ब्रा. १. ७. १; मै. सं. २. ६. ३; कठ. सं. १५. २.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे पञ्चमकाण्डे
द्वितीयप्रपाठके तृतीयं ब्राह्मणम् ॥ ( अ. २. ४. )

---

१–३. मा. सं. ९. ३७.     ४–८. मा. सं. ९. ३८.

## ५. २. ४.

### ( त्रिषंयुक्तहविरादिकम् )

आग्नावैष्णवमेकादशकपालं पुरोडाशं निर्व्वपति । ऐन्द्रावै
चरुं व्वैष्णवं त्रिकपालं वा पुरोडाशं चरुं वा तेन त्रिषंयुक्तेन
पुरुषानेतद्देवा ऽउपायंस्तथो ऽएवैष ऽएतत्पुरुषानेवोपैति ॥१॥

( अर्द्धप्रपाठकः ५२ )

स यदाग्नावैष्णवः[1] । एकादशकपालः पुरोडाशो भवत्यग्निर्वै
व्वैष्णवाः पुरुषास्तदस्माऽअग्निर्दाता पुरुषान्ददाति॥२॥अथ यदैन्
ष्णवः । चरुर्भवतीन्द्रो वै यजमानो व्वैष्णवाः पुरुषास्तदस्माऽअ[2]
ता पुरुषान्ददाति तैरेवैतत्सᳬस्पृशते तानात्मन् कुरुते[3] ॥३॥ अथ
ष्णवः । त्रिकपालो वा पुरोडाशो भवति चरुर्व्वा यानेवास्माऽअ[4]
ता पुरुषान्ददाति तेष्वेवैतदन्ततः प्रतितिष्ठति यद्वै पुरुषवान् कर्म
कीर्षति शक्नोति वै तत्कर्तुं तत्पुरुषानेवैतदुपैति पुरुषवान्त्सूया
तस्य व्वामनो गौर्द्दक्षिणा स हि व्वैष्णवो यद्वामनः ॥४॥ अथा
त्रिषंयुक्तेन यजते । स ऽआग्नापौष्णमेकादशकपालं पुरोडाशं निर्व्वं
न्द्रापौष्णं चरुं पौष्णं चरुं तेन त्रिषंयुक्तेन यजते पशूनेव तद्देवा ऽउ
स्तथो ऽएवैषऽएतत्पशूनेवोपैति[5] ॥५॥ स यदाग्नापौष्णः । एका
कपालः पुरोडाशो भवत्यग्निर्व्वै दाता पौष्णाः पशवस्तदस्माऽ
रेव दाता पशून्ददाति[6] ॥६॥ अथ यदैन्द्रापौष्णः[7] । चरुर्भवतीन्द्र
यजमानः पौष्णाः पशवः स यानेवास्माऽअग्निर्दाता पशून्द
तैरेवैतत्सᳬस्पृशते तानात्मन् कुरुते[8] ॥७॥ अथ यत्पौष्णः । च
वति यानेवास्माऽअग्निर्दाता पशून्ददाति तेष्वेवैतदन्ततः प्रतिति

---

१. वैष्णवः इति. च
२. पुरुषाः स यानेवास्माऽअग्निरिति. क
३. कुरुते इति. च.
४. स यानेवेति. च.
५. वोपैति इति
६. ददाति. इति. च.
७. ऐन्द्रापौष्णः इति.ङ.
८. कुरुते इति

यद्वै पशुमान् कर्म चिकीर्षति शक्नोति वै तत्कर्तुं तत्पशूनेवैतदुपैति
पशुमान्त्सूयाऽइति तस्य श्यामो गौर्द्दक्षिणा स हि पौष्णो यच्छ्या-
मो द्वे वै श्यामस्य रूपे शुक्लं चैव लोम कृष्णं च द्वन्द्वं वै मिथुनं
प्रजननं प्रजननं वै पूषा पशवो हि पूषा पशवो हि प्रजननं मिथुन-
मेवैतत्प्रजननं क्रियते तस्माच्छ्यामो गौर्द्दक्षिणा ॥८॥ अथापरेण
त्रिषंयुक्तेन यजते । सोऽग्नीषोमीयमेकादशकपालं पुरोडाशं निर्व्व-
पत्यैन्द्रासौम्यं चरुँ सौम्यं चरुं तेन त्रिषंयुक्तेन यजते व्वर्च्च ऽएव
तद्देवा ऽउपायंस्तथो ऽएवैष ऽएतद्वर्च्च ऽएवोपैति ॥९॥ स यदग्नी-
षोमीयः । एकादशकपालः पुरोडाशो भवत्यग्निर्व्वै दाता व्वर्च्चः सो-
मस्तदस्मा ऽअग्निरेव दाता व्वर्च्चो [1]ददाति ॥१०॥ अथ यदैन्द्रा-
सौम्यः । चरुर्भवतीन्द्रो वै यजमानो व्वर्च्चः सोमः स यदेवास्मा
ऽअग्निर्दाता व्वर्च्चो ददाति तेनैवैतत्सँस्पृशते तदात्मन् [2]कुरुते ॥११॥
अथ यत्सौम्यः । चरुर्भवति यदेवास्माऽअग्निर्द्दाता व्वर्च्चो ददाति
तस्मिन्नेवैतदन्ततः प्रतितिष्ठति यद्वै व्वर्च्चस्वी कर्म चिकीर्षति शक्नो-
ति वै तत्कर्तुं तद्वर्च्च ऽएवैतदुपैति व्वर्च्चस्वी सूया ऽइति नो ह्यव-
र्च्चसो व्याप्त्या चनार्थोऽस्ति तस्य बभ्रुर्गौर्द्दक्षिणा स हि सौम्यो
यद्[3]बभ्रुः ॥१२॥ अथ श्वो भूते । व्वैश्वानरं द्वादशकपालं पुरोडाशं
निर्व्वपति व्वारुणं यवमयं चरुं ताभ्यामनूचीनाहं व्वेष्टिभ्यां यजते
समानबर्हिर्भ्यां वा ॥१३॥ स यद्वैश्वानरो भवति । सम्वत्सरो वै
व्वैश्वानरः सम्वत्सरः प्रजापतिः प्रजापतिरेव तद्भूमानं प्रजाः ससृजे
भूमानं प्रजाः सृष्ट्वा सूया ऽइति तथो ऽएवैष ऽएतद्भूमानं प्रजाः
सृजते भूमानं प्रजाः सृष्ट्वा सूया ऽ[4]इति ॥१४॥ अथ यद्[5]द्वादशक-
पालो भवति । द्वादश वै मासाः सम्वत्सरस्य सम्वत्सरो व्वैश्वान-
रस्तस्माद्द्वादशकपालो [6]भवति ॥१५॥ अथ यद्वारुणो यवमयश्चरुर्भ-

---

१. ददाति इति. च. २. कुरुते इति च. ३. यद्बभ्रुः इति. च.
४. इति इति. च ५. द्वादश इति. ग, घ. ६. भवति इति. च.

वति । तत्सर्व्वस्मादेवैतद्वरुणपाशात्सर्वस्माद्वरुण्यात्प्रजाः प्रमुञ्च ता ऽअस्यानमीवा ऽअकिल्बिषाः प्रजाः प्रजायन्तेऽनमीवा ऽअकिल्बिषाः प्रजा ऽअभिसूया ऽइति ॥१९॥ ऋषभो व्वैश्वानरस्य दक्षिणा । सम्वत्सरो वै व्वैश्वानरः सम्वत्सरः प्रजापतिर्ऋषभो वै पशूनां प्रजापतिस्तस्मादृषभो व्वैश्वानरस्य दक्षिणा कृष्णं व्वासो व्वारुणं तद्धि व्वारुणं यत्कृष्णं यदि कृष्णं न विन्देदपि यदेव किंच व्वासः स्याद्ग्रन्थिभिर्हि व्वासो व्वारुणं व्वरुण्यो हि ग्रन्थिः ॥१९॥

Cf. का. श ७. १. ३; तै. सं. १. ८. ८; तै. ब्रा. १. ७. २; मै. सं. २. ६. २-४; कठ. सं. १५. ३.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे पञ्चमकाण्डे द्वितीयप्रपाठके चतुर्थं ब्राह्मणम् ॥ ( अ. २. ५. )

( द्वितीयोऽध्यायस्समाप्तः )

५. २. ५.

( रत्निनां हवींषि )

अरण्योरग्नी समारोह्य । सेनान्यो गृहान् परेत्याग्नयेऽनीकवतेऽष्टाकपालं पुरोडाशं निर्व्वपत्यग्निर्व्वै देवतानामनीकꣳ सेना वै सेनानीरनीकं तस्मादग्नयेऽनीकवत ऽएतद्वाऽअस्यैकꣳरत्नं यत्सेनानीस्तस्माऽएवैतेन सूयते तꣳस्वमनपक्रमिणं कुरुते तस्य हिरण्यं दक्षिणाग्नेयो वाऽएष यज्ञो भवत्यग्ने रेतो हिरण्यं तस्माद्धिरण्यं दक्षिणा ॥१॥ अथ श्वो भूते । पुरोहितस्य गृहान् परेत्य बार्हस्पत्यं चरुं निर्व्वपति बृहस्पतिर्व्वै देवानां पुरोहितऽएष वाऽएतस्य पुरोहितो भवति तस्माद्बार्हस्पत्यो भवत्येतद्वा ऽअस्यैकꣳ रत्नं यत्पुरोहितस्तस्माऽएवैतेन सूयते तꣳ स्वमनपक्रमिणं कुरुते तस्य

---

१. सर्वस्मादेवेति ग.
२. ग्रन्थिः इति. ग, घ.
३, ४. दक्षिणा इति. च.
५. स्वमनप इति. ग, घ.

शितिपृष्ठो गौर्द्दक्षिणैषा वाऽऊर्ध्वा बृहस्पतेर्द्दिक्तदेषऽउपरिष्टादर्य्यम्णः पन्थास्तस्माच्छितिपृष्ठो बार्हस्पत्यस्य[1] दक्षिणा[2] ॥२॥ अथ श्वो भूते । सूयमानस्य गृहऽऐन्द्रमेकादशकपालं पुरोडाशं निर्व्वपति क्षत्रं वाऽइन्द्रः क्षत्रꣳ सूयमानस्तस्मादैन्द्रो भवति तस्यर्षभो दक्षिणा स ह्यैन्द्रो यदृषभः ॥३॥ अथ श्वो भूते[3] । महिष्यै गृहान् परेत्या ऽऽदित्यं[4] चरुं निर्व्वपतीयं वै पृथिव्यदितिः सेयं देवानां पत्न्येषा वाऽएतस्य पत्नी भवति तस्मादादित्यो भवत्येतद्वाऽअस्यैकꣳ रत्नं यन्महिषी तस्याऽएवैतेन सूयते ताꣳ स्वामनपक्रामिणीं कुरुते तस्यै धेनुर्द्दक्षिणा धेनुरिव वाऽइयं मनुष्येभ्यः सर्व्वान् कामान्दुहे माता धेनुर्मातेव वाऽइयं मनुष्यान् बिभर्ति तस्माद्धेनुर्द्दक्षिणा[5] ॥४॥ अथ श्वो भूते । सूतस्य गृहान् परेत्य व्वारुणं यवमयं चरुं निर्व्वपति सवो वै सूतः सवो वै देवानां व्वरुणस्तस्माद्वारुणो भवत्येतद्वाऽअस्यैकꣳ रत्नं यत्सूतस्तस्माऽएवैतेन सूयते तꣳ स्वमनपक्रामिणं कुरुते तस्याश्वो दक्षिणा स हि व्वारुणो यदश्वः[6] ॥५॥ अथ श्वो भूते । ग्रामण्यो गृहान् परेत्य मारुतꣳ सप्तकपालं पुरोडाशं निर्व्वपति व्विशो वै मरुतो व्वैश्यो वै ग्रामणीस्तस्मान्मारुतो भवत्येतद्वाऽअस्यैकꣳ रत्नं यद्ग्रामणीस्तस्माऽएवैतेन सूयते तꣳ स्वमनपक्रामिणं कुरुते तस्य पृषन् गौर्द्दक्षिणा भूमा वाऽएतद्रूपाणां यत्पृषतो गोर्व्विशो वै मरुतो भूमो वै व्विट्तस्मात्पृषन् गौर्द्दक्षिणा[7] ॥६॥ अथ श्वो भूते । क्षत्तुर्गृहान् परेत्य सावित्रं द्वादशकपालं वाष्टाकपालं वा पुरोडाशं निर्व्वपति सविता वै देवानां प्रसविता प्रसविता वै क्षत्ता तस्मात्सावित्रो भवत्येतद्वाऽअस्यैकꣳ रत्नं यत्क्षत्ता तस्माऽएवैतेन सूयते तꣳ स्वमनपक्रामिणं कुरुते तस्य श्येतोऽनड्वान्दक्षिणैष वै सविता यऽएष तपत्येति वाऽएष ऽएत्यनड्वान् युक्तस्तद्यच्छ्ये-

१. बार्हस्पत्यस्येति. ग,घ. २. दक्षिणा इति. च. ३. भूते इति. घ, च.
४. परेत्यऽआदित्यमिति. ग,घ. ५,७. दक्षिणा इति. च. ६. यदश्व- इति च

नो भवति श्येत ऽइव ह्येष[1] ऽउद्यंश्चास्तं च यन् भवति तस्माच्छ्येतोऽनड्वान्दक्षिणा[2] ॥७॥ अथ श्वो भूते । संग्रहीतुर्गृहान्[3] परेत्याश्विनं द्विकपालं पुरोडाशं निर्व्वपति सयोनी वाऽअश्विनौ सयोनी सव्यष्ठसारथी समानᳪहि रथमधितिष्ठतस्तस्मादाश्विनो भवत्येतद्वाऽअस्यैकᳪरत्नं यत्संग्रहीता तस्माऽएवैतेन सूयते तᳪस्वमनपक्रामिणं कुरुते तस्य यमौ गावौ दक्षिणा तौ हि सयोनी यद्यमौ यदि यमौ न विन्देदप्यनूचीनगर्भावेव गावौ दक्षिणा स्यातां ताऽउ ह्यपि समानयोनी ॥८॥ अथ श्वो भूते । भागदुघस्य गृहान् परेत्य पौष्णं चरुं निर्व्वपति पूषा वै देवानां भागदुघ ऽएष वाऽएतस्य भागदुघो भवति तस्मात्पौष्णो भवत्येतद्वाऽअस्यैकᳪ रत्नं यद्भागदुघस्तस्माऽएवैतेन सूयते तᳪ स्वमनपक्रामिणं कुरुते तस्य श्यामो गौर्द्दक्षिणा तस्यास्तावेव वर्ण्णौ यावसौ त्रिषंयुक्तेषु[4] ॥९॥ अथ श्वो भूते । अक्षावापस्य च गृहेभ्यो गोविकर्त्तस्य च गवेधुकाः सम्भृत्य सूयमानस्य गृहे रौद्रं गावेधुकं चरुं निर्व्वपति ते वाऽएते द्वे सती रत्नेऽएकं करोति सम्पदः कामाय तद्यदेतेन यजते यां वाऽइमाᳪ सभायां घ्नन्ति रुद्रो हैतामभिमन्यतेऽग्निर्व्वै रुद्रोऽधिदेवनं वाऽअग्निस्तस्यैतेऽङ्गारा[5] यदक्षास्तमेवैतेन प्रीणाति तस्य ह वाऽएषानुमता गृहेषु हन्यते यो वा राजसूयेन यजते यो वैतदेवं वेदैतद्वाऽअस्यैकᳪ रत्नं यदक्षावापश्च गोविकर्त्तश्च ताभ्यामेवैतेन सूयते तौ स्वावनपक्रामिणौ कुरुते तस्य द्विरूपो गौर्द्दक्षिणा शितिबाहुर्वा शितिवालो वासिर्नखरो वालदाम्नाक्षावपनं प्रबद्धमेतद्ध हि तयोर्भवति[6] ॥१०॥ अथ श्वो भूते । पालागलस्य गृहान् परेत्य चतुर्गृहीतमाज्यं गृहीत्वाध्वनऽआज्यं जुहोति "जुषाणोऽध्वाज्यस्य वेतु स्वाहे"ति प्रहे-

१. ह्येष इति. ग,घ. २. दक्षिणा इति. च. ३. सङ्गृहीतुरिति. ग,घ.
४. त्रिषंयुक्तेषु. इति. च. ५. अङ्गारा इति. ग,घ. ६. भवति इति च.

यो वै पालागलोऽध्वानं वै प्रहितऽएति तस्मादध्वनऽआज्यं जुहो-
येतद्वाऽअस्यैकꣳ रत्नं यत्पालागलस्तस्माऽएवैतेन सूयते तꣳ
त्वमनपक्रमिणं कुरुते तस्य दक्षिणाऽत्युक्षणवेष्टितं धनुश्चर्ममया बाणव-
तो लोहितऽउष्णीषऽएतदु हि तस्य भवति ॥११॥ तानि वा ऽएतानि ।
एकादश रत्नानि सम्पादयत्येकादशाक्षरा वै त्रिष्टुप् वीर्यं त्रिष्टुब्वी-
र्यमेवैतद्रत्नान्यभिसम्पादयति तद्यद्रत्निनाꣳ हविर्भिर्यजतऽएतेषां
राजा भवति तेभ्य ऽएवैतेन सूयते तान्त्स्वाननपक्रमिणः कुरुते
१२॥ अथ श्वो भूते । परिवृक्त्यै गृहान् परेत्य नैर्ऋतं चरुं निर्व-
ति या वाऽअपुत्रा पत्नी सा परिवृक्ती स कृष्णानां व्रीहीणां
खैर्निर्भिद्य तण्डुलान्नैर्ऋतं चरुꣳ श्रपयति स जुहोत्ये“ष ते निर्ऋ-
भागस्तं जुषस्व स्वाहे”ति या वाऽअपुत्रा पत्नी सा निर्ऋति-
हीता तद्यदेवास्याऽअत्र नैर्ऋतꣳ रूपं तदेवैतच्छमयति तथो
तꣳसूयमानं निर्ऋतिर्न गृह्णाति तस्य दक्षिणा कृष्णा गौः परिमू-
र्णी पर्यारिणी सा ह्यपि निर्ऋतिगृहीता तामाह “मा मेऽद्येशायां
त्सी”दिति तत्पाप्मानमपादत्ते ॥१३॥ Cf. का. श. ७. १. ४.
सं. १. ८. ९; तै. ब्रा. १. ७. ३; मै. सं. २. ६. ५; कठ. सं. १५. ४.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे पञ्चमकाण्डे
द्वितीयप्रपाठके पञ्चमं ब्राह्मणम् ॥ (अ. ३. १.)

## ५. २. ६.

## ( सोमारौद्रादिचरुद्वयम् )

उपरिष्टाद्रत्नानाꣳ सौमारौद्रेण यजते । स श्वेतायै श्वेतव-
यै पयसि श्रृतो भवति तद्यदुपरिष्टाद्रत्नानाꣳ सौमारौद्रेण यज-
॥१॥ स्वर्भानुर्ह वाऽआसुरः । सूर्यं तमसा विव्याध स तमसा
द्धो न व्यरोचत तस्य सोमारुद्रावेवैतत्तमोऽपाहताꣳ सऽएषोऽ-

१. तस्मा इति. ग, घ. २. एतानि इति. ग, घ. ३. कुरुते इति. ख, च.

पहतपाप्मा तपति तथोऽएवैषऽएतत्तमः प्रविशत्येतं वाव तमः प्रविशति यद्दयाज्ञियान् यज्ञेन प्रसजत्ययाज्ञियान्वाऽएतद्यज्ञेन प्रसजति शूद्रांस्त्वद्यांस्त्वत्तस्य सोमारुद्रावेवैतत्तमोऽपहतः सोऽपहतपाप्मैव दीक्षते तद्यच्छ्वेतायै श्वेतवत्सायै पयसि शृतो भवति कृष्णं वै तमस्तत्तमोऽपहन्ति तस्यैषैव श्वेता श्वेतवत्सा दक्षिणा ॥२॥ स हैतेनापि यजेत । योऽलं यशसे सन्न यशो भवति यो वाऽअनूचानः सोऽलं यशसे सन्न यशो भवति यो न यशो भवति स तमसा वै स तत्प्रावृतो भवति तस्य सोमारुद्रावेवैतत्तमोऽपहतः सोऽपहतपाप्मा ज्योतिरेव श्रिया यशसा भवति[1] ॥३॥ अथ मैत्राबार्हस्पत्यं चरुं निर्व्वपति । ह्वलति वाऽएष यो यज्ञपथादेत्येति वाऽएष यज्ञपथाद्यदयाज्ञियान्यज्ञेन प्रसजत्ययाज्ञियान्वाऽएतद्यज्ञेन प्रसजति शूद्रांस्त्वद्यांस्त्वन्मित्राबृहस्पती वै यज्ञपथो ब्रह्म हि मित्रो ब्रह्म हि यज्ञो ब्रह्म हि बृहस्पतिर्ब्रह्म हि यज्ञस्तत्पुनर्यज्ञपथमपिपद्यते सोऽपिपद्यैव यज्ञपथं दीक्षते तस्मान्मैत्राबार्हस्पत्यं चरुं निर्व्वपति ॥४॥ तस्यावृत्[2] । या स्वयम्प्रशीर्णाश्वत्थी शाखा प्राची वोदीची वा भवति तस्यै मैत्रं पात्रं करोति व्वरुण्या वाऽएषा या परशुवृक्णाथैषा मैत्री या स्वयम्प्रशीर्णा तस्मात्स्वयम्प्रशीर्णायै शाखायै मैत्रं पात्रं करोति[3] ॥५॥ अथातच्य दधि । व्विनाटऽआसिच्य रथं युक्त्वाबध्य देदीयितवाऽआह तद्यत्स्वयमुदितं नवनीतं तदाज्यं भवति व्वरुण्यं वाऽएतद्यन्मथितमथैतन्मैत्रं यत्स्वयमुदितं तस्मात्स्वयमुदितमाज्यं भवति[4] ॥६॥ द्वेधा तण्डुलान् कुर्वन्ति । स येऽणीयांसः परिभिन्नास्ते बार्हस्पत्या ऽअथ ये स्थवीयांसोऽपरिभिन्नास्ते मैत्रा न वै मित्रः कश्चन हिनस्ति न मित्रं कश्चन हिनस्ति नैनं कुशो न कण्टको व्विभिनत्ति नास्य व्व्रणश्च नास्ति सर्व्वस्य ह्येव मित्रो मित्रम् ॥७॥

---

१. भवति इति. च. २. तस्यावृत् इति. घ. ३. करोति. इति. च.
४. भवति इति. ख. ५. [illegible]

अथ बार्हस्पत्यं चरुमधिश्रयति। तं मैत्रेण पात्रेणापिदधाति तदा-ज्यमानयति तत्तण्डुलानावपति स ऽएषऽऊष्मणैव श्रप्यते व्वरुण्यो वाऽएष य्योऽग्निना श्रृतोऽथैष मैत्रो य्यऽऊष्मणा श्रृतस्तस्मादूष्मणा श्रृतो भवति तयोरुभयोरवद्यन्नाह मित्राबृहस्पतिभ्यामनुब्रूहीत्याश्रा-व्याह मित्राबृहस्पती य्यजेति व्वषट्कृते जुहोति ॥८॥ Cf. का. श. ७. २. २., तै. सं. १. ८. ९; तै. ब्रा. १. ७. ३; मै सं. २. ६. ६; काठ. सं. १५. ५.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे पञ्चमकाण्डे द्वितीयप्रपाठके षष्ठं ब्राह्मणम् ॥ ( अ. ३. २. )

## ५. २. ७.

## ( देवस्वांहवींषि )

स वै दीक्षते। सऽउपवसथेऽग्नीषोमीयं पशुमालभते तस्य व्वपया प्रचर्याग्नीषोमीयमेकादशकपालं पुरोडाशं निर्व्वपति तदनु देवस्वाᳬं ह-वीᳬंषि निरुप्यन्ते ॥१॥ (शतं ३१००) सवित्रे सत्यप्रसवाय। द्वादशक-पालं वाष्टाकपालं वा पुरोडाशं निर्व्वपति प्लाशुकानां व्व्रीहीणाᳬं सविता वै देवानां प्रसविता सवितृप्रसूतः सूयाऽइत्यथ य्यत्प्लाशुकानां व्रीहीणां क्षिप्रे मा प्रसुवानिति[1] ॥२॥ अथाग्नये गृहपतये। अष्टाकपालं पुरो-डाशं निर्व्वपत्याशूनाᳬं व्व्रीहीणामग्निर्व्वै गार्हपतं य्यावतो य्यावतऽईष्टे तदेन-मग्निरेव गृहपतिर्गार्हपतमभि परिणयत्यथ य्यदाशूनां क्षिप्रे मा परि-णयानिति[2] ॥३॥ अथ सोमाय व्वनस्पतये। श्यामाकं चरुं निर्व्वपति तदेनᳬं सोमऽएव व्वनस्पतिरोषधिभ्यः सुवत्यथ य्यच्छ्यामाको भवत्येते वै सोमस्यौषधीनां प्रत्यक्षतमां य्यच्छ्यामाकास्तस्माच्छ्या-माको भवति[3] ॥४॥ अथ बृहस्पतये व्वाचे। नैवारं चरुं निर्व्वपति तदेनं बृहस्पतिरेव व्वाचे सुवत्यथ य्यन्नैवारो भवति ब्रह्म वै बृह-

१. प्रसुवानिति इति च.  २. परिणयानिति ख. परिणयानिति इति. च

३. भवति. इति च. एवमेवोत्तरत्राऽपि कण्डिकान्तस्थितभवतौ द्रष्टव्यम्।

स्पतिरेते वै ब्रह्मणा पच्यन्ते यन्नीवारास्तस्मान्नैवारो भवति ॥५॥ अथेन्द्राय ज्येष्ठाय । हायनानां चरुं निर्व्वपति तदेनमिन्द्रऽएव ज्येज्यैष्ठ्यमभि परिणयत्यथ यद्धायनानां भवत्यतिष्ठा वाऽएता ओषधयो यद्धायनाऽअतिष्ठो वाऽइन्द्रस्तस्माद्धायनानां भव ॥६॥ अथ रुद्राय पशुपतये । रौद्रं गावेधुकं चरुं निर्व्वपति तदेन रुद्रऽएव पशुपतिः पशुभ्यः सुवत्यथ यद्गावेधुको भवति व्वास्तव्य वाऽएष देवो व्वास्तव्या गवेधुकास्तस्माद्गावेधुको भवति ॥७॥ अ मित्राय सत्याय । नाम्बानां चरुं निर्व्वपति तदेनं मित्रऽएव सत ब्रह्मणे सुवत्यथ यन्नाम्बानां भवति व्वरुण्या वाऽएताऽओषधय यः कृष्टे जायन्तेऽथैते मैत्रा यन्नाम्बास्तस्मान्नाम्बानां भवति ॥८ अथ व्वरुणाय धर्मपतये । व्वारुणं यवमयं चरुं निर्व्वपति तदेनं व्व रुणऽएव धर्मपतिर्द्धर्मस्य पतिं करोति परमता वै सा यो धर्मस पतिरसद्यो हि परमतां गच्छति तᳬं हि धर्मऽउपयन्ति तस्माद्वरु णाय धर्मपतये ॥९॥ अथाग्नीषोमीयेन पुरोडाशेन प्रचरति । तस्या निष्टऽएव स्विष्टकृद्भवत्यथैतैर्हविर्भिः प्रचरति यदेतैर्हविर्भिः प्रचररि ॥१०॥ अथैनं दक्षिणे बाहावभिपद्य जपति। "सविता त्वा सवानाᳬं सुवतामग्निर्गृहपतीनाᳬं सोमो व्वनस्पतीनाम् । बृहस्पतिर्व्वाचऽइ न्द्रो ज्यैष्ठ्याय रुद्रः पशुभ्यो मित्रः सत्यो व्वरुणो धर्मपतीनाम् ॥११॥ "इमं देवाः । असपत्नᳬं सुवध्व" मितीमं देवाऽअभ्रातृव्यᳬं सुव ध्वमित्येवैतदाह "महते क्षत्राय महते ज्यैष्ठ्याये"ति नात्र तिरोहि तमिवास्ति "महते जानराज्याये"ति महते जनानाᳬं राज्यायेत्ये वैतदाहे"न्द्रस्येन्द्रियाये"ति व्वीर्यायेत्येवैतदाह यदाहेन्द्रस्येन्द्रि यायेती "मममुष्य पुत्रममुष्यै पुत्र"मिति तद्यदेवास्य जन्म ततऽए-

१ देवो इ त.ख. २. गवेधुका इति.ग. ३. प्रचरति. इति ख,च. प्रचरति इति घ
४. मा. सं. ९ ३९. ५–९. मा सं.९.४०. ८. जानानाᳬं इति. च.

१०. "अमुष्यं" इत्येव मुद्रितपुस्तकेषूपलभ्यते । परन्तु 'अमुष्य' इति संहिता-भाष्यादतः पाठः, च पुस्तकपाठोऽपि ।

वैतदाह "स्यै विश" ऽइति यस्यै विशो राजा भवत्ये "षं वोऽमी राजा सोमोऽस्माकं ब्राह्मणानाᳲ राजे"ति तदस्माऽइदᳫं सर्वमाद्यं करोति ब्राह्मणमेवापोद्धरति तस्माद्ब्राह्मणोऽनाद्यः सोमराजा हि भवति ॥१२॥ एता ह वै देवताः सवस्येशते । तस्माद्देवस्वो नाम तदेनमेता ऽएव देवताः सुवते ताभिः सूतः श्वः सूयते ॥१३॥ ता वै द्विनाम्न्यो भवन्ति । द्वन्द्वं वै वीर्यं वीर्यवत्यः सुवान्ताऽइति तस्माद्द्विनाम्न्यो भवन्ति ॥१४॥ अथाहाग्नये स्विष्टकृतेऽनुब्रूहीति । तद्यदन्तरेणाहुतीऽएतत्कर्म क्रियतऽएष वै प्रजापतिर्यऽएष यज्ञस्तायते यस्मादिमाः प्रजाः प्रजाताऽएतम्वेवाप्येतर्ह्यनु प्रजायन्ते तदेनं मध्यतऽएवैतस्य प्रजापतेर्दधाति मध्यतः सुवति तस्मादन्तरेणाहुती ऽएतत्कर्म क्रियतऽआश्राव्याहाग्नये स्विष्टकृते प्रेष्येति वषट्कृते जुहोति ॥१५॥ ॥ Cf का. श. ७. २. ३; तै. सं. १. ८. १०; तै. ब्रा. १. ७. ४; मै. सं. २. ६. ६; काठ. सं. १५. ५.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे पञ्चमकाण्डे
द्वितीयप्रपाठके सप्तमं ब्राह्मणम् ॥ ( अ. ३. ३. )

द्वितीयः प्रपाठकस्समाप्तः ॥

( कण्डिका संख्या १०४ ॥ )

---

१, २. मा. सं. ९. ४०. ३. 'देवा' इत्येव
४. तस्मादिति. ग. ५. भवन्ति इ°

## अथ तृतीयः प्रपाठकः ॥

### ५. ३. १.

### ( अभिषेकार्थानामपां सम्भरणम् )

ॐ स वाऽअपः सम्भरति । तद्यदपः सम्भरति व्वीर्यं वाऽआपो व्वीर्यमेवैतद्रसमपाᳬं सम्भरति[1] ॥१॥ औदुम्बरे पात्रे[2] । अन्नं वा ऽऊर्गुदुम्बरऽऊर्जो ऽन्नाद्यस्यावरुद्ध्यै तस्मादौदुम्बरे पात्रे ॥२॥ स सारस्वतीरेव प्रथमा गृह्णाति । "अपो[3] देवा मधुमतीरगृभ्ण"न्नित्यपो देवा रसवतीरगृह्णन्नित्येवैतदा "ह्योर्जस्वती[4] राजस्वश्चिताना"ऽइति रसवतीरित्येवैतदाह यदाह्योर्जस्वतीरिति राजस्वश्चिताना ऽइति यः प्रज्ञाता राजस्वऽइत्येवैतदाह "याभिर्मित्रावरुणावभ्यषिञ्च"[5] न्नित्येताभिर्हि मित्रावरुणावभ्यषिञ्च "न्याभिरिन्द्रमनयन्नत्यराती"[6] रित्येताभिर्हीन्द्रं नाष्ट्रा रक्षाᳬंस्यत्यनयंस्ताभिरभिषिञ्चति व्वाग्वै सरस्वती व्वाचैवैनमेतदभिषिञ्चत्येता वाऽएका ऽआपस्ता ऽएवैतत्सम्भरति ॥३॥ अथाध्वर्युः । चतुर्गृहीतमाज्यं गृहीत्वापोऽभ्यवैति तद्याऽऊर्मी व्युद्दतः पशौ वा पुरुषे वाभ्यवेते तौ गृह्णाति ॥४॥ स यः प्राङुदर्द्दति । तं गृह्णाति "वृष्ण[7]ऽऊर्मिरसि राष्ट्रदा राष्ट्रं मे देहि स्वाहा व्वृष्णऽऊर्मिरसि राष्ट्रदा राष्ट्रममुष्मै देही"[8]ति ॥५॥ अथ यः प्रत्यङुदर्द्दति । तं गृह्णाति[9] "व्वृषसेनो[10]ऽसि राष्ट्रदा राष्ट्रं मे देहि स्वाहा व्वृषसेनोऽसि राष्ट्रदा राष्ट्रममुष्मै देही"ति ताभिरभिषिञ्चति व्वीर्यं वाऽएतदपामुदर्द्दति पशौ वा पुरुषे वाभ्यवेते व्वीर्येणैवैनमेतदभिषिञ्चत्येता वाऽएकाऽआपस्ताऽएवैतत्सम्भरति ॥६॥ अथ स्यन्दमाना

---

१. सम्भरति इति च. एवमेवाऽग्रेऽपि । २. पात्रे इति ग. घ, पात्रे इति. च.

३–६. मा. सं. १०. १. ७. मा. सं. १०. २.८. देहीति इति च.

९. गृह्णाति इति. च. १०. मा. सं. १०. २.

ह्णाति । "अर्थेत स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहार्थेत स्थ राष्ट्रदा
ष्ट्रममुष्मै दत्ते"ति ताभिरभिषिञ्चति वीर्य्येण वाऽएताः स्यन्दन्ते
आदेनाः स्यन्दमाना न किञ्चन प्रतिधारयते वीर्य्येणैवेनमेतदभि-
ञ्चत्येता वाऽएकाऽआपस्ताऽएवैतत्सम्भरति ॥७॥ अथ याः स्य-
मानानां प्रतीपᳫ स्यन्दन्ते । ता गृह्णात्यो "जस्वती स्थ राष्ट्रदा
ष्ट्रं मे दत्त स्वाहौजस्वती स्थ राष्ट्रदा राष्ट्रममुष्मै दत्ते"ति ताभि-
भिषिञ्चति वीर्येण वाऽएताः स्यन्दमानानां प्रतीपᳫ स्यन्दन्ते
र्य्येणैवेनमेतदभिषिञ्चत्येता वाऽएकाऽआपस्ताऽएवैतत्सम्भरति॥८॥
थापयतीर्गृह्णाति । "आपः परिवाहिणी स्थ राष्ट्रदा ( राष्ट्रं मे दत्त
ाहाऽपः परिवाहिणी स्थ राष्ट्रदा ) राष्ट्रममुष्मै दत्ते"ति ताभिरभि-
ञ्चत्येतस्यै वाऽएषापच्छिद्यैषैव पुनर्भवत्यपि ह वा ऽअस्यान्यरा-
यो राष्ट्रे भवत्युप्यन्यराष्ट्रीयमवहरते तथास्मिन् भूमानं दधाति
नैवेनमेतदभिषिञ्चत्येता वा ऽएकाऽआपस्ताऽएवैतत्सम्भरति ॥९॥
थ नदीपतिं गृह्णाति । "अपां पतिरसि राष्ट्रदा राष्ट्रं मे देहि स्वा-
पां पतिरसि राष्ट्रदा राष्ट्रममुष्मै देही"ति ताभिरभिषिञ्चत्यपां
ऽएष पतिर्यन्नदीपतिर्विशामेवेनमेतत्पतिं करोत्येता वाऽएकाऽआ-
स्ताऽएवैतत्सम्भरति ॥१०॥ अथ निवेष्यं गृह्णाति । "अपां
र्भोऽसि राष्ट्रदा राष्ट्रं मे देहि स्वाहापां गर्भोऽसि राष्ट्रदा
ष्ट्रममुष्मै देही"ति ताभिरभिषिञ्चति गर्भं वाऽएतदापऽउप-
वेष्टन्ते विशामेवेनमेतद्गर्भं करोत्येता वा ऽ एकाऽआपस्ता-
एवैतत्सम्भरति ॥११॥ अथ यः स्यन्दमानानाᳫ स्थावरो
ो भवति । प्रत्यातापे ता गृह्णाति "सूर्यत्वचस स्थ राष्ट्रदा राष्ट्रं
दत्त स्वाहा सूर्यत्वचस स्थ राष्ट्रदा राष्ट्रममुष्मै दत्ते"ति ताभिर-

---

१, २. मा. सं. १०.३.    ३. प्रतीपᳫग, घ.    ४. मा. सं. १०. ३.
() एतच्चिह्नाङ्कितो भागः घ च पुस्तकयोर्नाऽस्ति ।    ५. राष्ट्रदा इति ग.
६,८. मा. सं. १०. ३.    ७. देहीति. ग.    ९. मा. सं. १०. ४.
१०. ताभिरिति घ.

भिषिञ्चति वर्चसैवैनमेतदभिषिञ्चति सूर्यत्वचसमेवैनमेतत्करोति वरुण्या वा ऽएता ऽआपो भवन्ति याः स्यन्दमानानां न स्यन्दन्ते वरुणसवो वा ऽएष यद्राजसूयं तस्मादेताभिरभिषिञ्चत्येता वा ऽएकाऽआपस्ता ऽएवैतत्सम्भरति ॥१२॥ अथ या ऽआतपति वर्षन्ति । ता गृह्णाति "सूर्य्यवर्च्चस स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा सूर्य्यवर्च्चस स्थ राष्ट्रदा राष्ट्रममुष्मै दत्ते"ति ताभिरभिषिञ्चति वर्च्चसैवैनमेतदभिषिञ्चति सूर्य्यवर्च्चसमेवैनमेतत्करोति मेध्या वा ऽएता ऽआपो भवन्ति[3] या ऽआतपति वर्षन्त्यप्राप्ता हीमां[4] भवन्त्यथैनां[5] गृह्णाति मेध्यमेवैनमेतत्करोत्येता[6] वाऽएका ऽआपस्ता ऽएवैतत्सम्भरति ॥१३॥ अथ वैशन्तीर्गृह्णाति । "मान्दा[7] स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा मान्दा स्थ राष्ट्रदा राष्ट्रममुष्मै दत्ते"ति ताभिरभिषिञ्चति विशमेवास्माऽएतत्स्थावरामनपक्रमिणीं करोत्येता वाऽएकाऽआपस्ताऽएवैतत्सम्भरति ॥१४॥ अथ कूप्या गृह्णाति । "व्रजक्षित स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा व्रजक्षित स्थ राष्ट्रदा राष्ट्रममुष्मै दत्ते"ति ताभिरभिषिञ्चति तद्याऽइमां 'परेणापस्ता ऽएवैतत्सम्भरत्यपामु चैव सर्व्वत्वाय तस्मादेताभिरभिषिञ्चत्येता वा ऽएकाऽआपस्ताऽएवैतत्सम्भरति ॥१५॥

( काण्डस्यार्द्धम् २३६ )

अथ प्रुष्वा गृह्णाति । "वाशा[8] स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा वाशा स्थ राष्ट्रदा राष्ट्रममुष्मै दत्ते[10]"ति ताभिरभिषिञ्चत्यन्नाद्येनैवैन-[11]मेतदभिषिञ्चत्यन्नाद्यमेवास्मिन्नेतद्दधातीदं वाऽअसावादित्य ऽउद्यन्नेव यथायमाग्निर्निर्दहेदेवमोषधीरन्नाद्यं निर्दहति तदेताऽआपोऽभ्यवयन्त्यः शमयन्ति न ह वाऽइहान्नाद्यं परिशिष्येत[12] यदेताऽआपो नाभ्यवेयु-

१. मेतदिति ग, घ. २. मा. सं. १०. ४.
३. भवन्ति इति. ख. ४. हीमा इति ङ, च. ५ अथैना इति ख, ग, घ.
६. करोत्येवा एका इति. ख. ७–९ मा.सं.१०.४. १०. दत्तेति ग.
११. त्यन्नाद्येनेति. ग. १२ परिशिष्यते इति मुद्रितपुस्तकेषु पाठः ।

रन्नाद्येनैवैनमेतदभिषिञ्चत्येता वाऽएकाऽआपस्ताऽएवैतत्सम्भरति ॥१६॥ अथ मधु गृह्णाति । “शविष्ठा स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा शविष्ठा स्थ राष्ट्रदा राष्ट्रममुष्मै दत्ते”ति ताभिरभिषिञ्चत्यपां चैवैनमेतदोषधीनां च रसेनाभिषिञ्चत्येता वाऽएकाऽआपस्ताऽएवैतत्सम्भरति ॥१७॥ अथ गोर्व्विजायमानायाऽउल्व्या गृह्णाति । “शक्वरी स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा शक्वरी स्थ राष्ट्रदा राष्ट्रममुष्मै दत्ते”ति ताभिरभिषिञ्चति पशुभिरेवैनमेतदभिषिञ्चत्येता वाऽएकाऽआपस्ताऽएवैतत्सम्भरति ॥१८॥ अथ पयो गृह्णाति । “जनभृत स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा जनभृत स्थ राष्ट्रदा राष्ट्रममुष्मै दत्ते”ति ताभिरभिषिञ्चति पशुभिरेवैनमेतदभिषिञ्चत्येता वाऽएकाऽआपस्ताऽएवैतत्संभरति॥१९॥अथ घृतं गृह्णाति।“विश्वभृतस्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा विश्वभृतस्थ राष्ट्रदा राष्ट्रममुष्मै दत्ते”ति ताभिरभिषिञ्चति पशूनामेवैनमेतद्रसेनाभिषिञ्चत्येता वाऽएकाऽआपस्ताऽएवैतत्सम्भरति ॥२०॥ अथ मरीचीः । अञ्जलिना सङ्गृह्यापिसृजत्या-“पः स्वराजस्थ राष्ट्रदा राष्ट्रममुष्मै दत्ते”त्येता वाऽआपः स्वराजो यन्मरीचयस्ता यत्स्यन्दन्त ऽइवान्योन्यस्याऽएवैतच्छ्रियाऽअतिष्ठमानाऽउत्तराधरा ऽइव भवन्त्यो यन्ति स्वाराज्यमेवास्मिन्नेतद्दधात्येता वाऽएकाऽआपस्ताऽएवैतत्सम्भरति ॥२१॥ ता वाऽएताः । सप्तदशापः सम्भरति सप्तदशो वै प्रजापतिः प्रजापतिर्यज्ञस्तस्मात्सप्तदशापः सम्भरति ॥२२॥ षोडश ताऽआपो याऽअभिजुहोति । षोडशाहुतीर्जुहोति ता द्वात्रिंशद्यासु न जुहोति सारस्वतीषु च मरीचिषु च ताश्चतुस्त्रिंशत्त्रयस्त्रिंशद्वै देवाः प्रजापतिश्चतुस्त्रिंशस्तदेनं प्रजापतिं करोति ॥२३॥ अथ यद्धुत्वा हुत्वा गृह्णाति । वज्रो वाऽआज्यं वज्रेणैवैतदाज्येन स्पृत्वा स्पृत्वा स्वीकृत्य गृह्णाति ॥२४॥

---

१. मा सं. १०. ४. २. त्यपां इति ग. ३. सम्भरति इति ङ,च. एवमग्रेऽपि.
४–७. मा. सं. १० ४. ८. करोति. इति. च. ९. गृह्णाति. इति. च.

अथ यत्सारस्वतीषु न जुहोति । वाग्वै सरस्वती वज्रऽआज्यं नेद्वज्रेणाज्येन वाचꣳहिनसानीति तस्मात्सारस्वतीषु न जुहोति[1] ॥२५॥ अथ यन्मरीचिषु न जुहोति । नेदनद्धैवैतामाहुतिं जुहवानीति तस्मान्मरीचिषु न जुहोति ॥२६॥ ताः सार्द्धमौदुम्बरे पात्रे समवनयति । "मधुमतीर्मधुमतीभिः पृच्यन्तामि[2]"ति रसवती[3] रसवतीभिः पृच्यन्तामित्येवैतदाह "महि क्षत्रं क्षत्रियाय वन्वाना"ऽइति[4] तत्परोक्षं क्षत्रं यजमानायाशिषमाशास्ते यदाह महि क्षत्रं क्षत्रियाय वन्वानाऽइति ॥२७॥ ताऽअग्रेण मैत्रावरुणस्य धिष्ण्यꣳ सादयति[5] । "अनाधृष्टाः[6] सीदत सहौजस"ऽइत्यनाधृष्टाः सीदत रक्षोभिरित्येवैतदाह सहौजसऽइति सवीर्याऽइत्येवैतदाह "महि[7] क्षत्रं क्षत्रियाय दधती"रिति तत्प्रत्यक्षं क्षत्रं यजमानायाशिषमाशास्ते यदाह महि क्षत्रं क्षत्रियाय दधतीरिति ॥२८॥ Cf का. शा. ७. २. २; मै. सं. २. ६. ७, ८; तै. सं. १. ८. ११; काठ. १५. ६.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे पञ्चमकाण्डे तृतीयप्रपाठके प्रथमं ब्राह्मणम् ॥ (अ. ३. ४.)

५. ३. २.

(यजमानाभिषेकः)

तं वै माध्यन्दिने सवनेऽभिषिञ्चति । एष वै प्रजापतिर्य्यऽएष यज्ञस्तायते[8] यस्मादिमाः प्रजाः प्रजाताऽएतस्वेवाप्येतर्ह्यनु प्रजायन्ते तदेनं मध्यतऽएवैतस्य प्रजापतेर्द्दधाति मध्यतः सुवति[9] ॥१॥ अगृहीते माहेन्द्रे । एष वाऽइन्द्रस्य निष्केवल्यो ग्रहो यन्माहेन्द्रोऽप्यस्यैतन्निष्केवल्यमेव स्तोत्रं निष्केवल्यꣳशस्त्रमिन्द्रो वै यजमानस्तदेनꣳ

१. जुहोति इति ख, जुहोति इति. च. २, ४. मा. सं. १०. ४
३. रसवत्य इति. ख. ५, सादयति इति. ख. ६, ७. मा. सं १०. ४
८, तायते इति. घ. ९. सुवति इति. च.

स्वऽएवायतनेऽभिषिञ्चति तस्मादगृहीते माहेन्द्रे[1] ॥२॥ अग्रेण मैत्रावरुणस्य धिष्ण्यꣳ । शार्दूलचर्मोपस्तृणाति "सोमस्य[2] त्विषिरसी"ति यत्र वै सोमऽइन्द्रमत्यपवत स यत्ततः शार्दूलः समभवत्तेन सोमस्य त्विषिस्तस्मादाह सोमस्य त्विषिरसीति "तवेव[3] मे त्विषिर्भूयादि"ति शार्दूलत्विषिमेवास्मिन्नेतद्दधाति[4] तस्मादाह तवेव मे त्विषिर्भूयादिति[5] ॥३॥ अथ पार्थानि जुहोति । पृथी[6] ह वै वैन्यो मनुष्याणां प्रथमोऽभिषिषिचे[7] सोऽकामयत सर्व्वमन्नाद्यमवरुन्धीयेति तस्माऽएतान्यजुहवुः सऽइदꣳ सर्व्वमन्नाद्यमवरुरुधेऽपि ह स्मास्माऽआरण्यान् पशूनभि ह्वयन्त्यसावेहि राजा त्वा पश्यतऽइति तथेदꣳ सर्व्वमन्नाद्यमवरुरुधे सर्व्वꣳ ह वाऽअन्नाद्यमवरुन्द्धे यस्यैवं विदुषऽएतानि हूयन्ते ॥४॥ तानि वै द्वादश भवन्ति । द्वादश वै मासाः संवत्सरस्य तस्माद्द्वादश भवन्ति ॥५॥ षट् पुरस्तादभिषेकस्य जुहोति । षडुपरिष्टात्तदेनं मध्यतऽएवैतस्य प्रजापतेर्द्दधाति मध्यतः सुवति ॥६॥ स यानि पुरस्तादभिषेकस्य जुहोति । बृहस्पतिस्तेषामुत्तमो भवत्यथ यान्युपरिष्टादभिषेकस्य जुहोतीन्द्रस्तेषां प्रथमो भवति ब्रह्म वै बृहस्पतिरिन्द्रियं वीर्य्यमिन्द्रऽएताभ्यामेवैनमेतद्वीर्य्याभ्यामुभयतः परिबृꣳहति ॥७॥ स जुहोति । यानि पुरस्तादभिषेकस्य जुहोत्य[8]"ग्नये[9] स्वाहे"ति तेजो वाऽअग्निस्तेजसैवैनमेतदभिषिञ्चति "सोमाय[10] स्वाहे"ति क्षत्रं वै सोमः क्षत्रेणैवैनमेतदभिषिञ्चति[11]"सवित्रे[12] स्वाहे"ति सविता वै देवानां प्रसविता सवितृप्रसूतऽएवैनमेतदभिषिञ्चति "सरस्वत्यै[13] स्वाहे"ति वाग्वै सरस्वती वाचैवैनमेतदभिषिञ्चति "पूष्णे[14] स्वाहे"ति पशवो वै पूषा पशुभिरेवैनमेतदभिषिञ्चति "बृहस्पतये[15]

१. माहेन्द्रे इति ख, ग.　२, ३. मा. सं. १०. ५.
४. मेवास्मिन्निति. ग.　५. दिति इति. च.　६. पृथुर्ह वै इति ग
७. अभिषिषिचे इति ख, अभिषिषिञ्चे इति. ग, ङ.　८. जुहोति. इति. ग
९, १०. मा. स. १०. ५.　११. क्षत्रेणेति. ग, घ.　१२-१५. मा. सं. १०.

स्वाहे''ति ब्रह्म वै बृहस्पतिर्ब्रह्मणै[1]वैनमेतदभिषिञ्चत्येतानि पुरस्तादभिषेकस्य जुहोति तान्येतान्यग्निनामानीत्याचक्षते[2] ॥८॥ अथ जुहोति । यान्युपरिष्टादभिषेकस्य जुहोती''[3]न्द्राय स्वाहे''ति वीर्यं वाऽइन्द्रो वीर्यैणैवैनमेतदभिषिञ्चति ''घो[4]षाय स्वाहे''ति वीर्यं वै घोषो वीर्यैणैवैनमेतदभिषिञ्चति ''श्[5]लोकाय स्वाहे''ति वीर्यं वै श्लोको वीर्यैणैवैनमेतदभिषिञ्च''त्यं[6]ऽशाय स्वाहे''ति वीर्यं वाऽअंऽशो वीर्यैणैवैनमेतदभिषिञ्चति ''भ[7]गाय स्वाहे''ति वीर्यं वै भगो वीर्यैणैवैनमेतदभिषिञ्चत्य''र्य[8]म्णे स्वाहे''ति तदेनमस्य सर्व्वस्यार्यमणं करोत्येतान्युपरिष्टादभिषेकस्य जु[9]होति तान्येतान्यादित्यनामानीत्याचक्षते[10] ॥९॥ अग्रेण मैत्रावरुणस्य धिष्ण्यम् । अभिषेचनीयानि पात्राणि भवन्ति यत्रैताऽआपोऽभिषेचनीया भवन्ति ॥१०॥ पालाशं भवति । तेन ब्राह्मणोऽभिषिञ्चति ब्रह्म वै पलाशो ब्रह्मणै[11]वैनमेतदभिषिञ्चति[12] ॥ ॥११॥ औदुम्बरं भवति । तेन स्वोऽभिषिञ्चत्य[13]न्नं वाऽऊर्गुदुम्बरऽऊर्ग्वै स्वं यावद्वै पुरुषस्य स्वं भवति नैव तावदशनायति तेनोर्क्स्वं तस्मादौदुम्बरेण स्वोऽभिषिञ्चति ॥१२॥ नैयग्रोधपादं भवति । तेन मित्र्यो राजन्योऽभिषिञ्चति पद्भिर्व्वै न्यग्रोधः प्रतिष्ठितो मित्रेण वै राजन्यः प्रतिष्ठितस्तस्मान्नैयग्रोधपादेन मित्र्यो राजन्योऽभिषि[14]ञ्चति ॥१३॥ आश्वत्थं भवति । तेन व्वैश्योऽभिषिञ्चति स यदेवादोऽश्वत्थे तिष्ठतऽइन्द्रो मरुतऽउपामन्त्रयत तस्मादाश्वत्थेन व्वैश्योऽभिषिञ्चत्येतान्यभिषेचनीयानि पात्राणि भ[15]वन्ति ॥१४॥ अथ पवित्रे करोति । ''प[16]वित्रे स्थो व्वैष्णव्यावि''ति सोऽसावेव बन्धुस्तयोर्हिरण्यं प्रवयति ताभ्यामेताऽअभिषेचनीयाऽअपऽउत्पुनाति तद्यद्धिरण्यं प्रव-

---

१. ब्रह्मणा इति. घ. २. आचक्षते इति. च. ३-८. मा.सं. १०.५.

९. जुहोति इति. च. १०. आचक्षते इति. च. ११. ब्रह्मणा इति. ग.

१२. अभिषिञ्चति इति. ग, षिञ्चति इति. च. १३. त्यन्नं वा इति. च.

१४. अभिषिञ्चति इति. ग. १५. भवन्ति इति. च. १६. मा. सं. १०. ६.

त्यमृतमायुर्हिरण्यं तदा स्वमृतमायुर्दधाति तस्माद्धिरण्यं प्रवयति
१५॥ सऽउत्पुनाति । "[1]सवितुर्व्वः प्रसवऽउत्पुनाम्य[2]च्छिद्रेण पवि-
ग सूर्यस्य रश्मिभि"रिति सोऽसावेव बन्धुर"[3]निर्भृष्टमसि व्वाचो
धुस्तपोजाऽ"इत्यनाधृष्टा स्थ रक्षोभिरित्येवैतदाह यदाहानिभृष्ट-
तीति व्वाचो बन्धुरिति य्यावद्वै प्राणेष्वापो भवन्ति तावद्वाचा व्व-
ते तस्मादाह व्वाचो बन्धुरिति ॥१६॥ तपोजाऽइति । अग्नेर्व्वै
गे जायते धूमादभ्रमभ्राद्वृष्टिरग्नेर्व्वाऽएता जायन्ते तस्मादाह तपो-
ऽइति ॥१७॥ "[4]सोमस्य दात्रमसी"ति । य्यदा वाऽएनमेताभिर[5]-
षुण्वन्त्यथाहुतिर्भवति तस्मादाह सोमस्य दात्रमसीति "[6]स्वाहा
जस्व"ऽइति तदेनाः स्वाहाकारेणैवोत्पुनाति ॥१८॥ ता[7]ऽएतेषु पा-
[ व्यानयति । "[8]सधमादो द्युम्निनीरापऽएता"ऽइत्यनतिमानिन्य
त्येवैतदाह यदाह सधमादऽइति द्युम्निनीरापऽएताऽइति व्वीर्यव-
इत्येवैतदाहा"[9]नाधृष्टाऽअपस्यो व्वसाना"ऽइत्यनाधृष्टा स्थ रक्षो-
रित्येवैतदाह यदाहानाधृष्टाऽअपस्यो व्वसानाऽइति "[10]पस्त्यासु
व्वरुणः सधस्थामि"ति व्विशो वै पस्त्या व्वि[11]क्षु चक्रे व्वरुणः
छामित्येवैतदाहा"[12]पाᳬ शिशुर्मातृतमास्वन्त"रित्यपां वाऽएष
गुर्भवति य्यो राजसूयेन य्यजते तस्मादाहापाᳬ शिशुर्मातृतमा-
[13]तैरिति ॥१९॥ अथैनं व्वासाᳬसि परिधापयति । तत्तार्प्यमिति
मो भवति तस्मिन्त्सर्व्वाणि यज्ञरूपाणि निष्यूतानि भवन्ति तदेनं
धापयति "[14]क्षत्रस्योल्बमसी"ति तद्यदेव क्षत्रस्योल्बं ततऽएवैन-
[15]जनयति ॥२०॥ अथैनं पाण्ड्वं परिधापयति । "[16]क्षत्रस्य जरा-
"ति तद्यदेव क्षत्रस्य जरायु ततऽएवैनमेतज्जनयति ॥ २१ ॥

---

१. मा सं. ०. ६.　२. म्यच्छिद्रेणेति. ग.　३,४. मा. सं. १०. ६.
५. अभिषुण्वन्तीति. ग, घ.　६. मा. सं. १०. ६.　७. ताऽएतेष्विति. घ.
८-१०. मा सं. १०. ७　११. विक्षु. इति. ग.　१२. मा. सं. १०. ७.
१३. रिति. इति. ख, रिति इति ग.　१४,१६ मा. सं. १० ८.
१५. जनयति इति. च.एवमग्रेऽपि.

अथाधीवासं प्रति मुञ्चति । "क्षत्रस्य योनिरसी"ति तद्यैव क्षत्रस्य योनिस्तस्याऽएवैनमेतज्जनयति ॥ २२ ॥ अथोष्णीषꣳसꣳहृत्य । पुरस्तादवगूहति । "क्षत्रस्य नाभिरसी"ति तद्यैव क्षत्रस्य नाभिस्तामेवास्मिन्नेतद्दधाति ॥२३॥ तद्धैके । समन्तं परिवेष्टयन्ति नाभिर्वाऽअस्यैषा समन्तं वाऽइयं नाभिः पर्येतीति वदन्तस्तदु तथा न कुर्यात्पुरस्तादेवावगूहेत्पुरस्ताद्धीयं नाभिस्तद्य-देनं वासाꣳसि परिधापयति जनयत्येवैनमेतज्जातमभिषिञ्चानीति तस्मादेनं वासाꣳसि परिधापयति ॥२४॥ तद्धैके । निदधत्येतानि वासाꣳस्यथैनं पुनर्दीक्षितवसनं परिधापयन्ति तदु तथा न कुर्या-दङ्गानि वाऽअस्य जनूर्वासाꣳस्यङ्गैर्हैनꣳ सजन्वा तन्वा व्यर्द्धयन्ति वरुण्यं दीक्षितवसनꣳ सऽएतेषामेवैकं वाससां परिदधीत तदेन-मङ्गैर्जन्वा तन्वा समर्द्धयति वरुण्यं दीक्षितवसनं तदेनं वरुण्याद्दी-क्षितवसनात्प्रमुञ्चति ॥२५॥ स यत्रावभृथमभ्यवैति । तदेतदभ्यव-हरन्ति तत्सलोम क्रियते सऽएतेषामेवैकं वाससां परिधायोदैति तानि वशायै वा वपायाꣳहुतायां दद्यादुदवसानीयायां वेष्टौ ॥२६॥ अथ धनुरधितनोति । "इन्द्रस्य वार्त्रघ्नमसी"ति वार्त्रघ्नं वै धनुरिन्द्रो वै यजमानो द्वयेन वाऽएषऽइन्द्रो भवति यच्च क्षत्रि-यो यदु च यजमानस्तस्मादाहेन्द्रस्य वार्त्रघ्नमसीति ॥२७॥ अथ बाहू विमार्ष्टि । "मित्रस्यासि वरुणस्यासी"ति बाह्वोर्वै धनुर्बा-हुभ्यां वै राजन्यो मैत्रावरुणस्तस्मादाह मित्रस्यासि वरुणस्यासीति तदस्मै प्रयच्छति "त्वयायं वृत्रं वधेदि"ति त्वयायं द्विषन्तं भ्रातृ-व्यं वधेदित्येवैतदाह ॥२८॥ अथास्मै तिस्रऽइषूः प्रयच्छति । स यया प्रथमया समर्पणेन पराभिनत्ति सैका सेयं पृथिवी सैषा दवा नामाथ

१, २ मा. सं. १०. ८. ३. तद्यैव इति. च, घ. ४. मा. सं. १०. ८.
५. मसीति इति. च. ६, ७. मा. सं. १०. ८. ८. त्वयायं इति. ग, घ.
९. तदाह इति ख, च. १०. अथास्मै इति. ख. ११. प्रयच्छति इति. च.
१२. परान् भिनत्ति इति. च १३. पृथिवी इति. ख.

यथा विद्धः शयित्वा जीवति वा म्रियते वा सा द्वितीया तदिद-
न्तरिक्षꣳ सैषा रुजा नामाथ यथापैव राध्नोति सा तृतीया सासौ
ः सैषा क्षुमा नामैता हि वै तिस्रऽइषवस्तस्मादस्मै तिस्रऽइषूः
यच्छति ॥२९॥ ताः प्रयच्छति । "पातैनं प्राञ्चं पातैनं प्रत्यञ्चं पा-
नं तिर्यञ्चं दिग्भ्यः पाते"ति तदस्मै सर्व्वा ऽएव दिशोऽशरव्याः
रोति तद्यदस्मै धनुः प्रयच्छति व्वीर्यं वाऽएतद्राजन्यस्य यद्धनु-
र्यवन्तमभिषिञ्चानीति तस्माद्वाऽअस्माऽआयुधं प्रयच्छति ॥३०॥
थैनमाविदो व्वाचयति । "आविर्मर्या" ऽइत्यनिरुक्तं प्रजापतिर्व्वाऽ-
नेरुक्तस्तदेनं प्रजापतयऽआवेदयति सोऽस्मै सवमनुमन्यते तेनानु-
ः सूयते ॥३१॥ "आवित्तोऽअग्निर्गृहपतिरि"ति । ब्रह्म वाऽ-
ग्निस्तदेनं ब्रह्मणऽआवेदयति तदस्मै सवमनुमन्यते तेनानुमतः
यते ॥३२॥

(अर्द्धप्रपाठकः ६० )

"आवित्तऽइन्द्रो व्वृद्धश्रवा"ऽइति । क्षत्रं वाऽइन्द्रस्तदेनं क्षत्रा-
वेदयति तदस्मै सवमनुमन्यते तेनानुमतः सूयते ॥३३॥ "आवि-
मित्रावरुणौ धृतव्रतावि"ति । प्राणोदानौ वै मित्रावरुणौ तदेनं
णोदानाभ्यामावेदयति तावस्मै सवमनुमन्येते ताभ्यामनुमतः सूय-
॥३४॥ "आवित्तः पूषा व्विश्ववेदा"ऽइति । पशवो वै पूषा तदेनं
भ्यऽआवेदयति तेऽस्मै सवमनुमन्यन्ते तैरनुमतः सूयते ॥३५॥
ावित्ते द्यावापृथिवी व्विश्वशम्भुवावि"ति । तदेनमाभ्यां द्यावापृ-
ीभ्यामावेदयति तेऽअस्मै सवमनुमन्यते ताभ्यामनुमतः सूयते ॥
६॥ "आवित्तादिति रुरुशर्मे"ति । इयं वै पृथिव्यदितिस्तदेनमस्यै

१. मा. सं. १०. ८. १. पातेति. ग. ३. प्रयच्छति इति. ख,च.
४. अथ इति. ख. ५, ६. मा.सं. १०.९. ७. तदस्मै इति ग.
८. मा. सं. १०. ९. आवित्तोऽइन्द्र इति ग, घ ९. इति इति. ग.
१०-१३. मा.सं. १०.९. १४. रुरु इति. ग, घ.

पृथिव्याऽआवेदयति सास्मै सवमनुमन्यते तयानुमतः सूयते तद्याभ्यऽएवैनमेतद्देवताभ्यऽआवेदयति ताऽअस्मै सवमनुमन्यन्ते ताभिरनुमतः सूयते ॥२७॥ Cf. का. श. ७. २. ४; मै. सं. २. ६. ९; तै. सं. १. ८. १२; काठ. १५. ७.

इति माध्यदिनशाखीये शतपथब्राह्मणे पञ्चमकाण्डे
तृतीयप्रपाठके द्वितीयं ब्राह्मणम् ॥ ( अ. ३. ५. )

( इति तृतीयोऽध्यायः )

५. ३. ३.

( यजमानाभिषेकधर्माः )

केशवस्य पुरुषस्य । लोहायसमास्यऽआविध्य"[1]म्यवेष्टा दन्दशूका"ऽइति सर्व्वान्[2]वाऽएष मृत्यूनतिमुच्यते सर्व्वान्वधान्यो राजसूयेन यजते तस्य जरैव मृत्युर्भवति तद्यो मृत्युर्यो व्वधस्तमेवैतद्[3]तिनयति यद्दन्दशूकान् ॥१॥ अथ यत्केशवस्य पुरुषस्य । न वाऽएष स्त्री न पुमान्यत्केशवः पुरुषो यदह पुमांस्तेन न स्त्री यदु केशवस्तेनो न पुमान्नैतदयो न हिरण्यं[4] यल्लोहायसं नैते क्रिमयो नाक्रिमयो यद्दन्दशूका ऽअथ यल्लोहायसं भवति लोहिताऽइव हि दन्दशूकास्तस्मात्केशवस्य पुरुषस्य[5] ॥२॥ अथैनं दिशः समारोहयति । "[6]प्राचीमारोह गायत्री त्वावतु रथन्तरꣳसाम त्रिवृत्स्तोमो व्वसन्तऽऋतुर्ब्रह्म द्रविणम्" ॥३॥ "दक्षिणा[7]मारोह । त्रिष्टुप्त्वावतु बृहत्साम पञ्चदश स्तोमो ग्रीष्मऽऋतुः क्षत्रं द्रविणम्" ॥४॥ "[8]प्रतीचीमारोह । जगती त्वावतु व्वैरूपꣳ साम सप्तदश स्तोमो व्वर्षाऽऋतुर्व्विड् द्रविणम्" ॥५॥ "[9]उदीचीमारोह । अनुष्टुप्त्वावतु व्वैराजꣳ

१. मा. सं. १०. १० २. सर्वानिति . ग. ३. स्तमेवेति ग.
४. हिरण्यं इति. च. ५. पुरुषस्य इति. ख,च. ६. मा. सं. १०. १०
७. मा. सं. १०. ११. ८. मा. सं. १०. १२. ९. मा. सं. १०.१३.

सामैकविंशस्तोमः शरदृतुः फलं द्रविणम्" ॥६॥ "ऊर्ध्वामारोह । पङ्क्तिस्त्वावतु शाक्वररैवते सामनी त्रिणवत्रयस्त्रिंशौ स्तोमौ हेमन्तशिशिरावृतू वर्च्चो द्रविणमि"ति ॥७॥ तद्यदेनं दिशः समारोहयति । ऋतूनामेवैतद्रूपमृतूनेवैनमेतत्संवत्सरं समारोहयति सऽऋतून्त्संवत्सरं समारुह्य सर्व्वमेवेदमुपर्युपरि भवत्यर्वागेवास्मादिदं सर्वं भवति ॥८॥ शार्दूलचर्मणो जघनार्द्धे । सीसं निहितं भवति तत्पदा प्रत्यस्यति "प्रत्यस्तं नमुचेः शिर"ऽइति नमुचिर्ह वै नामासुरऽआस तमिन्द्रो निविव्याध तस्य पदा शिरोऽभितष्ठौ स यदभिष्ठितऽउदबाधत सऽउच्छ्वङ्कस्तस्य पदा शिरः प्रचिच्छेद ततो रक्षः समभवत्तद्ध स्मैनमनुभाषते क्व गमिष्यसि क्व मे मोक्ष्यसऽइति ॥९॥ तत्सीसेनापजघान । तस्मात्सीसं मृदु सृतजवं हि सर्व्वेण हि वीर्येणापजघान तस्माद्धिरण्यरूपं सन्न कियच्चन नार्हति सृतजवं हि सर्व्वेण हि वीर्येणापजघान तद्वै स तन्नाष्ट्रा रक्षांस्यपजघान तथोऽएवैषऽएतन्नाष्ट्रा रक्षांस्यतोऽपहन्ति ॥१०॥ अथैनं शार्दूलचर्म्मारोहयति । "सोमस्य त्विषिरसी"ति यत्र वै सोमऽइन्द्रमत्यपवत स यत्ततः शार्दूलः समभवत्तेन सोमस्य त्विषिस्तस्मादाह सोमस्य त्विषिरसीति "तवेव मे त्विषिर्भूयादि"ति शार्दूलत्विषिमेवास्मिन्नेतद्दधाति तस्मादाह तवेव मे त्विषिर्भूयादिति ॥११॥ अथ रुक्ममधस्तादुपास्यति । "मृत्योः पाही"त्यमृतमायुर्हिरण्यं तदमृतमायुषि प्रतितिष्ठति ॥१२॥ अथ रुक्मः शतवितृण्णो वा भवति । नववितृण्णो वा स यदि शतवितृण्णः शतायुर्वाऽअयं पुरुषः शततेजाः शतवीर्यस्तस्माच्छतवितृण्णो यद्यु नववितृण्णो नवेमे

---

१. मा. सं. १०. १४　२. मेवैनमेतद्रूपमृतूनेवैतदिति. ग, घ.

३. भवत्यर्वागेवेति घ, च.　४. दिदंसर्वमिति ग.　५. मा. सं. १०. १४.

६. उक्ष्वङ्क इति च.　७. अपहन्ति इति. च.　८, ९. मा. सं. १०. १५.

१०. दिति इति ग, दिति इति. च. ११. मा. सं. १०. १५. १२. तिष्ठति इति च

पुरुषे प्राणास्तस्मान्नवधितृण्णः ॥१३॥ तमुपरिष्टाच्छीर्ष्णो निदधा- ति । "ओजोऽसि सहोऽस्यमृतमसी"त्यमृतमायुर्हिरण्यं तदस्मिन्न- मृतमायुर्दधाति तद्यद्रुक्मा उभयतो भवतोऽमृतमायुर्हिरण्यं तद- मृतेनैवैनमेतदायुषोभयतः परिबृꣳहति तस्माद्रुक्मा उभयतो भवतः ॥१४॥ अथ बाहू उद्गृह्णाति । "हिरण्यरूपा उषसो वि- रोक उभाविन्द्रा उदिथः सूर्यश्च । आरोहतं वरुण मित्र गर्त्तं ततश्चक्षाथामदितिं दितिं चे"ति बाहू वै मित्रावरुणौ पुरुषो गर्त्त- स्तस्मादाहारोहतं वरुण मित्र गर्त्तमिति ततश्चक्षाथामदितिं दितिं चेति ततः पश्यतꣳ स्वं चारणं चेत्येवैतदाह ॥१५॥ नैतेनोद्गृह्णी- यात् । "मित्रोऽसि वरुणोऽसी"त्येवोद्गृह्णीयाद्बाहू वै मित्रावरुणौ बाहुभ्यां वै राजन्यो मैत्रावरुणस्तस्मान्मित्रोऽसि वरुणोऽसीत्येवोद्- गृह्णीयात् ॥१६॥ तद्यदेनमूर्ध्वबाहुमभिषिञ्चति । वीर्यं वा एतद्रा- जन्यस्य यद्बाहू वीर्यं वा एतदपाꣳ रसः सम्भृतो भवति येनैनमे- तदभिषिञ्चति नेन्म इदं वीर्यं वीर्यमपाꣳ रसः सम्भृतो बाहू विलनादिति तस्मादेनमूर्ध्वबाहुमभिषिञ्चति ॥१७॥ Cf. का. श. ७. ३. १; मै. सं. २. ६. १०; तै. सं. १. ८. १३; काठ. १५. ७.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे पञ्चमकाण्डे
तृतीयप्रपाठके तृतीयं ब्राह्मणम् ॥ ( अ. ४. १. )

५. ३. ४.

( अभिषेकः )

तं वै प्राञ्चं तिष्ठन्तमभिषिञ्चति । पुरस्ताद्ब्राह्मणोऽभिषिञ्चत्य- ध्वर्युर्वा यो वास्य पुरोहितो भवति पश्चादितरे ॥१॥ "सोमस्य त्वा

१. निदधाति इति. ख. २. मा. सं. १०. १५. ३. भवतः इति ग.
४, ६. मा. सं. १०. १६. ५. उभाविन्द्रोऽउदिथ इति ग, घ.
७. वरुणौ इति ख, ग, घ. ८. अभिषिञ्चति इति ग. ९. मा. सं. १०. १७.

द्युम्नेनाभिषिञ्चामी''ति । व्वीर्य्येणैतदाह "भ्रभ्राजसे''ति व्वीर्य्येणैवैतदाह "सूर्य्यस्य व्वर्चसे''ति व्वीर्य्येणैवैतदाहे "न्द्रस्येन्द्रियेणे''ति व्वीर्य्येणैवैतदाह "क्षत्राणां क्षत्रपतिरेधी''ति राज्ञामधिराजऽएधीत्येवैतदाहा''ति दिद्यून् पाही''तीषवो वै दिद्यव ऽइषुवधमेवैनमेतदतिनयति तस्मादाहाति दिद्यून् पाहीति ॥२॥ "इमं देवाः । असपत्नꣳ सुवध्वमि''तीमं देवाऽआभ्रातृव्यꣳ सुवध्वमित्येवैतदाह "महते क्षत्राय महते ज्यैष्ठ्यायेति नात्र तिरोहितमिवास्ति "महते जानराज्याये''ति महते जनानाꣳराज्यायेत्येवैतदाहे"न्द्रस्येन्द्रियाये''ति व्वीर्यायेत्येवैतदाह यदाहेन्द्रस्येन्द्रियायेती "मममुष्य पुत्रममुष्यै पुत्रमि''ति तद्यदेवास्य जन्म ततऽएवैतदाहा"स्यै व्विश''ऽइति यस्यै व्विशो राजा भवत्ये"ष वोऽमी राजा सोमोऽस्माकं ब्राह्मणानाꣳ राजे''ति तदस्माऽइदꣳ सर्व्वमाद्यं करोति ब्राह्मणमेवापोद्धरति तस्माद्ब्राह्मणोऽनाद्यः सोमराजा हि भवति ॥३॥ अथैतमभिषेकम् । कृष्णविषाणयानुविमृष्टे व्वीर्यं वाऽएतदपाꣳ रसः सम्भृतो भवति यैनैनमेतदभिषिञ्चतीदं मे व्वीर्यꣳ सर्व्वमात्मानमुपस्पृशादिति तस्माद्वाऽअनुविमृष्टे ॥४॥ सोऽनुविमृष्टे । "प्र पर्व्वतस्य व्वृषभस्य पृष्ठादि''ति यथायं पर्व्वतोऽतिष्ठावा यथर्षभः पशूनतिष्ठावैवं वाऽएषऽइदꣳ सर्व्वमतितिष्ठत्यर्व्वागेवास्मादिदꣳ सर्व्वं भवति यो राजसूयेन यजते तस्मादाह प्र पर्व्वतस्य व्वृषभस्य पृष्ठा"न्नावश्चरन्ति स्वसिचऽइयानाः । ता ऽआववृत्रन्नधरागुदक्ता अहिं बुध्न्यमनु रीयमाणा''ऽइति ॥५॥ अथैनमन्तरेव शार्दूलचर्मणि व्विष्णुक्रमान् क्रमयति । "व्विष्णोर्व्विक्रमणमसि व्विष्णोर्व्विक्रान्तमसि व्विष्णोः क्रान्तमसी''तीमे वै लोका व्विष्णोर्व्विक्रमणं व्विष्णोर्व्विक्रान्तं व्विष्णोः क्रान्तं तदिमानेव

---

१-५. मा. सं. १०. १७.   ६. इषुवधमिति. च.   ७-१३. मा. सं. १०. १८.
१४. भवति इति. च.   १५, १६. मा. सं. १०. १९   १७. इयानाः इति. च.
१८. इति इति. ग, इति. च.   १९. मा सं. १०. १९.

लोकान्त्समारुह्य सर्व्वमेवेदमुपर्युपरि भवत्यर्व्वागेवास्मादिदꣳ सर्व्वं भवति ॥६॥ अथ ब्राह्मणस्य पात्रे । सꣳस्रवान्त्समवनयति तद्ब्राह्मणꣳ राजानमनु यशः करोति तस्माद्ब्राह्मणो राजानमनु यशः ॥ ७ ॥ तद्योऽस्य पुत्रः प्रियतमो भवति । तस्माऽएतत्पात्रं प्रयच्छतीदं मेऽयं वीर्यं पुत्रोऽनुसन्तनवदिति ॥८॥ अथ प्रतिपरेत्य गार्हपत्यमन्वारब्धे जुहोति । "प्रजापते न त्वदेतान्यन्यो विश्वा रूपाणि परि ता बभूव । यत्कामास्ते जुहुमस्तन्नोऽअस्त्वयममुष्य पिते"ति तद्यः पुत्रस्तं पितरं करोति यः पिता तं पुत्रं तदेनयोर्व्वीर्यं व्यतिषजत्य"सावस्य पिते"ति तद्यः पिता तं पितरं करोति यः पुत्रस्तं पुत्रं तदेनयोर्व्वीर्यं व्यतिषज्य पुनरेव यथायथं करोति "वयꣳ स्याम पतयो रयीणाꣳ स्वाहे"त्याशीरेवैषैतस्य कर्मण ऽआशिषमेवैतदाशास्ते ॥९॥ अथ यऽएष सꣳस्रवोऽतिरिक्तो भवति । तमाग्नीध्रीये जुहोत्यतिरिक्तो वाऽएष सꣳस्रवो भवत्यतिरिक्त ऽआग्नीध्रीयो गार्हपत्ये हवीꣳषि श्रपयन्त्याहवनीये जुह्वत्यथैषोऽतिरिक्तस्तदतिरिक्तऽएवैतदतिरिक्तं दधात्युत्तरार्द्धे जुहोत्येषा ह्येतस्य देवस्य दिक्तस्मादुत्तरार्द्धे जुहोति स जुहोति "रुद्र यत्ते क्रिवि परं नाम तस्मिन् हुतमस्यमेष्टमसि स्वाहे"ति ॥१०॥ Cf का. श. ७. ३. २.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे पञ्चमकाण्डे
तृतीयप्रपाठके चतुर्थं ब्राह्मणम् ॥ (अ. ४. २. )

---

१ दिति इति. ग, दिति इति.च.

२, ३. मा. सं. १०. २०.

४. व्यतिषज्येति. ग व्यतिसज्येति. घ.

५. मा. सं. १०. २०.

६. दाशास्ते इति. ग.

७. जुहोत्येष इति ग, घ.

८. मा. सं. १०. २०.

## ५. ३. ५.

### ( रथोपावहरणादि )

तद्योऽस्य स्वो भवति । तस्य शतं वा परःशता वा गाऽउत्तरेणाहवनीयꣳसꣳस्थापयति तद्यदेवं करोति ॥१॥ वरुणाद्ध वाऽअभिषिषिचानात् । इन्द्रियं वीर्यमपचक्राम शश्वद्यऽएषोऽपाꣳ रसः सम्भृतो भवति येनैनमेतदभिषिञ्चति सोऽस्येन्द्रियं वीर्यं निर्जघान तत्पशुष्वन्वविन्दत्तस्मात्पशवो यशो यदेष्वन्वविन्दत्तत्पशुष्वनुवि-द्येन्द्रियं वीर्यं पुनरात्मन्नधत्त तथोऽएवैषऽएतन्नाहैवास्मान्निन्द्रियं वीर्यमपक्रामति वरुणसवो वाऽएष यद्राजसूयमिति वरुणोऽकरो-देति त्वेवैषऽएतत्करोति ॥२॥ अथ रथमुपावहरति । क्षत्रं वै राजन्या-परागभवति रथेन वै तदनुयुङ्क्ते तस्माद्रथमुपावहरति ॥३॥ सऽउपावहरति । "इन्द्रस्य वज्रोऽसी"ति वज्रो वै रथऽइन्द्रो वै यजमानो द्वयेन वाऽएषऽइन्द्रो भवति यच्च क्षत्रियो यदु च यजमानस्तस्मादाहेन्द्रस्य वज्रोऽसीति ॥४॥ तमन्तर्वेद्यभ्यववर्त्य युनक्ति । "मित्रावरुणयोस्त्वा प्रशास्त्रोः प्रशिषा युनज्मी"ति बाहू वै मैत्रावरुणौ बाहुभ्यां वै राजन्यो मैत्रावरुणस्तस्मादाह मित्रावरुणयोस्त्वा प्रशास्त्रोः प्रशिषा युनज्मीति ॥५॥ तं चतुर्युजं युनक्ति । स जघनेन सदोऽग्रेण शालां येनैव दक्षिणा यन्ति तेन प्रतिपद्यते जघनेन चात्वालमग्रेणाग्नीध्रमुदच्छति ॥६॥ तमातिष्ठति । "अव्यथायै त्वा स्वधायै त्वे"त्यनार्त्यै त्वेत्येवैतदाह यदाहाव्यथायै त्वेति स्वधायै त्वेति रसाय त्वेत्येवैतदाहा"रिष्टोऽअर्जुन" इत्यर्जुनो ह वै नामेन्द्रो यदस्य गुह्यं नाम द्वयेन वाऽएषऽइन्द्रो भवति यच्च क्ष-

१. आहवनीयꣳस्थापयतीति. ग, घ.	२. भवति इति घ, च.
३. करोति इति. च.	४, ५. मा. सं. १०. २१.	६, ८. युनज्मीति. ख, च.
७. स्त्वा इति. ग, घ.	९. मग्रेणेति ग, घ.	१०. तमातिष्ठति इति. च.
११, १२. मा. सं. १०. २१.

त्रियो यद्दु च यजमानस्तस्मादाहारिष्टोऽअर्जुनऽइति ॥७॥ अथ दक्षिणायुग्यमुपार्षति । "मरुतां प्रसवेन जये"ति विशो वै मरुतो विशा वै तत्क्षत्रियो जयति यज्जिगीषति तस्मादाह मरुतां प्रसवेन जयेति ॥८॥ अथ मध्ये गवामुद्यच्छति । "आपाम मनसे"ति मनसा वाऽइदꣳ सर्व्वमाप्तं तन्मनसैवैतत्सर्व्वमाप्नोति तस्मादाहापाम मनसेति ॥९॥ अथ धनुरार्त्न्या गामुपस्पृशति । "समिन्द्रियेणे"तीन्द्रियं वै वीर्यं गावऽइन्द्रियमेवैतद्वीर्यमात्मन् धत्तेऽथाह जिनामीमाः कुर्व्वऽइमाऽइति ॥१०॥ तद्यत्स्वस्य गोषूद्यच्छति । यद्वै पुरुषात्पराभवति यशो वा किञ्चिद्वा स्वꣳहैवास्य तत्प्रतमामिवाभ्यपक्रामति तत्स्वादेवैतदिन्द्रियं वीर्यं पुनरात्मन्धत्ते तस्मात्स्वस्य गोषूद्यच्छति ॥११॥ तस्मै तावन्मात्रीर्व्वा भूयसीर्व्वा प्रतिददाति । न वाऽएष क्रूरकर्मणे भवति यद्यजमानः क्रूरमिव वाऽएतत्करोति यदाह जिनामीमाः कुर्व्वऽइमाऽइति तथो हास्यैतदक्रूरं कृतं भवति तस्मात्तावन्मात्रीर्व्वा भूयसीर्वा प्रतिददाति ॥१२॥ अथ दक्षिणानायच्छति । सोऽग्रेण यूपं दक्षिणेन वेदिं येनैव दक्षिणा यन्ति तेन प्रतिपद्यते तं जघनेन सदोऽग्रेण शालामुद्यच्छति ॥१३॥ "मा तऽइन्द्र ते वयं तुराषाट् । अयुक्तासोऽअब्रह्मता विदसाम तिष्ठा रथमधि यं वज्रहस्ता रश्मीन्देव यमसे स्वश्वानि"त्युद्यच्छत्येवैतयाभीशवो वै रश्मयस्तस्मादाहारश्मीन्देव यमसे स्वश्वानित्यथ रथविमोचनीयानि जुहोति प्रीतो रथो विमुच्यातऽइति तस्माद्रथविमोचनीयानि

---

१. इति इति. ख, इति च. २, ४. मा सं. १०. २१. ३. जयेति इति ख, च.
५. मनसेति इति ग, मनसेति इति. च. ६. मा. सं. १०. २१
७. इति इति च. ८. हैवास्य इति. ग, घ. ९. तस्मादिति. ग.
१०. भूयसीरिति ग, घ. ११. ददाति इति च.
१२. मा. सं. १०. २२; "मा न इन्द्र" इति 'गघ' पुस्तकयोः पाठः ।
१३. स्तस्मादिति. ग.

ोति ॥१४॥ स जुहोति । "अग्नये गृहपतये स्वाहे"ति स यदे-
यꣳ रथस्य तदेवैतेन प्रीणाति वहा वाऽआग्नेया रथस्य वहा-
तेन प्रीणाति श्रीर्वै गार्हपतं यावतो यावतऽईष्टे तच्छ्रियमेवास्यै-
र्हपतꣳ राज्यमभि विमुच्यते ॥१५॥ "सोमाय वनस्पतये स्वा-
ति । द्वयानि वै वानस्पत्यानि चक्राणि रथ्यानि चानसानि च
ो न्वेवैतदुभयेभ्योऽरिष्टिं कुरुते सोमो वै वनस्पतिः स यदेव
नस्पत्यꣳ रथस्य तदेवैतेन प्रीणाति दारूणि वै वानस्पत्यानि
स्य दारूण्येवैतेन प्रीणाति क्षत्रं वै सोमः क्षत्रमेवास्यै तद्राज्यम-
विमुच्यते ॥१६॥ "मरुतामोजसे स्वाहे"ति । स यदेव मारुतꣳ
स्य तदेवैतेन प्रीणाति चत्वारोऽश्वा रथः पञ्चमो द्वौ सव्यष्टृ-
थी ते सप्त सप्त सप्त वै मारुतो गणः सर्व्वमेवैतेन रथं प्रीणाति
शो वै मरुतो विशमेवास्यैतद्राज्यमभिविमुच्यते ॥१७॥ "इन्द्र
न्द्रियाय स्वाहे"ति । स यदेवैन्द्रꣳ रथस्य तदेवैतेन प्रीणाति
ष्ठा वाऽऐन्द्रो रथस्य सव्यष्टारमेवैतेन प्रीणातीन्द्रियं वै वीर्यं-
ऽइन्द्रियमेवास्यैतद्वीर्यꣳ राज्यमभि विमुच्यते ॥१८॥ अथ वा-
ऽउपानहाऽउपमुञ्चते । अग्नौ ह वै देवा घृतकुम्भं प्रवेशयां
स्ततो वराहः सम्बभूव तस्माद्वराहो मेदुरो घृताद्धि सम्भूत-
माद्वराहे गावः सञ्जानते स्वमेवैतद्रसमभिसञ्जानते तत्पशूनामे-
से प्रतितिष्ठति तस्माद्वाराहाऽउपानहाऽउपमुञ्चते ॥१९॥ अथे-
त्यवेक्षमाणो जपति । "पृथिवि मातर्मा मा हिꣳसीर्मोऽअहं
मे"ति वरुणाद्ध वाऽअभिषिषिचानात्पृथिवी बिभयाञ्चकार म-
ऽअयमभूद्योऽभ्यषेचि यद्वै मायं नावदृणीयादिति वरुण ऽउ ह

---

१. मा. सं. १० २३.  २. वहा इति. ग.  ३. यावत इति. ग, घ.
४. तच्छ्रियमिति. ग.  ५. विमुच्यते इति ग. एवमग्रेऽपि
६–८. मा. सं. १०.२३.  ९. उपमुच्यते इति. घ.
१०. उपमुञ्चते. इति.ख,ग.  ११. मा. सं. १०. २३.

पृथिव्यै बिभयाञ्चकार यद्वै मेयं नावधून्वीतेति तदनयैवैतन्मित्र-
धेयमकुरुत न हि माता पुत्रꣳ हिनस्ति न पुत्रो मातरम् ॥२०॥
वरुणसवो वाऽएष यद्राजसूयम् । पृथिव्यु हैतस्माद्बिभेति महद्वा-
ऽअयमभूद्योऽभ्यषेचि यद्वै मायं नावदृणीयादित्येषऽउ ह्यस्यै बिभेति
यद्वै मेयं नावधून्वीतेति तदनयैवैतन्मित्रधेयं कुरुते न हि माता
पुत्रꣳ हिनस्ति न पुत्रो मातरं तस्मादेवं जपति ॥२१॥ सोऽवति-
ष्ठति । "[1]हꣳसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोण-
सत्[2] । नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऽऋतजा ऽअद्रिजा[3]
ऽऋतं बृहदि"त्येतामतिच्छन्दसं जपन्नेषा वै सर्वाणि छन्दाꣳसि
यदतिच्छन्दास्तथैनं पाप्मा नान्ववतिष्ठति ॥२२॥ तं न सकृदी-
तान्ववतिष्ठेत् । नेत्त्वं लोकमन्ववतिष्ठाद्यꣳ सुषुवाणोऽन्ववास्था-
दिति तꣳसरथमेव रथवाहणऽ[4] आदधाति ततोऽवाङुपप्रवते
तथा तं लोकं नान्ववतिष्ठति यꣳ सुषुवाणोऽन्ववास्थात् ॥२३॥
उत्तरेणाहवनीयं पूर्वाग्निरुद्धृतो भवति । स रथवाहणस्य[5] दक्षिण-
मन्वनुष्यन्दꣳ[6] शतमानौ प्रवृत्तावाबध्नाति[7] ॥२४॥ औदुम्बरीꣳ शा-
खामुपगूहति । तयोरन्यतरमुपस्पृशती"[8]यदस्यायुरस्यायुर्मयि धेहि
युङ्ङसि[9] वर्चो मयि धेही"ति तदायुर्वर्चऽआत्मन् धत्ते ॥२५॥
अथौदुम्बरीꣳशाखामुपस्पृशति । "[10]ऊर्गस्यूर्जं मयि धेही"ति तदूर्ज-
मात्मन् धत्ते तस्यैतस्य कर्मणऽएतावेव शतमानौ प्रवृत्तौ दक्षिणा
तौ ब्रह्मणे ददाति ब्रह्मा हि यज्ञं[11] दक्षिणतोऽभिगोपायति तस्मात्तौ
ब्रह्मणे ददाति[12] ॥२६॥ अग्रेण मैत्रावरुणस्य धिष्ण्यम् । मैत्रावरुणी
पयस्या निहिता भवति तामस्य बाहूऽअभ्युपावहरती "[13]इन्द्रस्य वां

---

१. मा. सं. १०. २४. २. सत् इति. ग, घ. ३. अद्रिजा इति. ग.
४,५. रथवाहन इति ग, घ. ६. ष्यन्दꣳ इति. ग, घ.
७. वायध्नाति इति. ख, वाबध्नाति इति. ग, वाबध्नाति इति च.
८, १०. मा.सं. १०.२५. ९. युङ्ङसि इति. ग, घ. ११. यज्ञं इति. ग.
१२. ददाति इति. च. १३. मा. सं. १०. २५.

वीर्य्यंकृतो बाहूऽअभ्युपावहरामी''ति पशूनां वाऽएष रसो यत्प-यस्या तत्पशूनामेवास्यैतद्रसं बाहूऽअभ्युपावहरति तद्यन्मैत्रावरुणी[1] भवति मित्रावरुणाऽउ हि बाहू तस्मान्मैत्रावरुणी भवति[2] ॥२७॥

Cf. ७. ३. ३ ; मै. सं. २. ६. ११ ; तै. सं. १. ८. १५ ; काठ. १५. ७, ८.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे पञ्चमकाण्डे
तृतीयप्रपाठके पञ्चमं ब्राह्मणम् ॥ ( अ. ४. ३. )

तृतीयः प्रपाठकस्समाप्तः ॥
( कण्डिकासंख्या ११९ )

## अथ चतुर्थः प्रपाठकः

### ५. ४. १.

### ( पयस्यायाः प्रचारः )

मैत्रावरुण्या पयस्यया प्रचरति । तस्याऽअनिष्ट ऽएव स्विष्ट-कृद्भवत्यथास्माऽआसन्दीमाहरन्त्युपरिसद्यं वाऽएष जयति यो यत्यन्तरिक्षसद्यं तदेनमुपर्यासिनमधस्तादिमाः प्रजाऽउपासते स्मादस्माऽआसन्दीमाहरन्ति सैषा खादिरी वितृण्णा भवति येयं वर्ध्रव्यूता[3] भरतानाम् ॥१॥ तामग्रेण । मैत्रावरुणस्य ण्यं निदधाति "स्योनासि[4] सुषदासी''ति शिवामेवैतच्छग्मां रोति[5] ॥२॥ अथाधीवासमास्तृणाति । "क्षत्रस्य[6] योनिरसी''ति वैव क्षत्रस्य योनिस्तामेवैतत्करोति[7] ॥३॥ अथैनमासादयति । स्योनामासीद सुषदामासीदे''ति[8] शिवाँ शग्मामासीदेत्येवैत-ह "क्षत्रस्य योनिमासीदे''ति[9] तद्यैव क्षत्रस्य योनिस्तस्या-

---

१. वरुणी इति. ग.	२. भवति इति. च.	३. वर्ध्रव्युता इति. क,ग.
४, ६. मा. सं. १०. २६	५, ७. करोति इति. च.	८, ९. मा. सं. १०. २६.

मेवैनमेतद्दधाति ॥४॥ अथान्तरा ँ सेऽभिमृश्य जपति । "निषसाद धृतव्रत"ऽइति धृतव्रतो वै राजा न वाऽएष सर्व्वस्माऽइव व्वदनाय न सर्वस्माऽइव कर्मणे य्यदेव साधु व्वदेद्यत्साधु कुर्यात्तस्मै वाऽएष च श्रोत्रियश्चैतौ ह वै द्वौ मनुष्येषु धृतव्रतौ तस्मादाह निषसाद धृतव्रतऽइति "व्वरुणः पस्त्यास्वे"ति व्विशो वै पस्त्या व्विक्ष्वेत्येवैतदाह "साम्राज्याय सुक्रतुरि"ति राज्यायेत्येवैतदाह य्यदाह साम्राज्याय सुक्रतुरिति ॥५॥ अथास्मै पञ्चाक्षान् पाणावावपति । "अभिर्भूरस्येतास्ते पञ्च दिशः कल्पन्तामि"त्येष वाऽअयानभिभूर्यत्कलिरेष हि सर्व्वानयानभिभवति तस्मादाहाभिभूरसीत्येतास्ते पञ्च दिशः कल्पन्तामिति पञ्च वै दिशस्तदस्मै सर्व्वाऽएव दिशः कल्पयति ॥६॥ अथैनं पृष्ठतस्तूष्णीमेव दण्डैर्घ्नन्ति । तं दण्डैर्घ्नन्तो दण्डवधमतिनयन्ति तस्माद्राजा दण्ड्यो य्यदेनं दण्डवधमतिनयन्ति ॥७॥ अथ व्वरं व्वृणीते । य्य ँ ह वै कं च सुषुवाणो व्वरं व्वृणीते सोऽस्मै सर्व्वः समृध्यते तस्माद्वरं व्वृणीते ॥८॥ स ब्रह्मन्नित्येव प्रथममामन्त्रयते । "ब्रह्म" प्रथममभिव्याहराणि ब्रह्मप्रसूतां व्वाचं व्वदानीति तस्माद्ब्रह्मन्नित्येव प्रथममामन्त्रयते "त्वं ब्रह्मासी"तीतरः प्रत्याह "सवितासि सत्यप्रसव"ऽइति व्वीर्यमेवास्मिन्नेतद्दधाति सवितारमेव सत्यप्रसवं करोति ॥९॥ ब्रह्मन्नित्येव द्वितीयमामन्त्रयते । त्वं ब्रह्मासीतीतरः प्रत्याह "व्वरुणोऽसि सत्यौजा"ऽइति व्वीर्यमेवास्मिन्नेतद्दधाति व्वरुणमेव सत्यौजसं करोति ॥१०॥ ब्रह्मन्नित्येव

---

१. दधाति इति. च. २–४ मा. सं. १०. २७.
५. सुक्रतुर्रिति इति. ग, सुक्रतुरिति इति च. ६. पञ्चाक्षानिति. ग.
७. मा. सं. १०. २८. ८. भूरस्येता इति.क, ग. ९. कल्पयति इति. क, च.
१०. पृष्ठत इति. ग. ११. नयन्ति इति. च. १२. मा. सं. १०. २८.
१३. ब्रह्मप्रसूतामिति. ग. १४, १५. मा. सं. १०. २८. १६. सवितारमिति. ग.
१७. मा. सं. १०. २८.

तृतीयमामन्त्रयते । त्वं ब्रह्मासीतीतरः प्रत्याहे "न्द्रोऽसि विशौजा"-
ऽइति वीर्यमेवास्मिन्नेतद्दधातीन्द्रमेव विशौजसं करोति ॥११॥ ब्र-
ह्मन्नित्येव चतुर्थमामन्त्रयते । त्वं ब्रह्मासीतीतरः प्रत्याह "रुद्रोऽसि
सुशेव"ऽइति तद्वीर्याण्येवास्मिन्नेतत्पूर्वाणि दधात्यथैनमेतच्छमयत्येव
तस्मादेष सर्वस्येशानो मृडयति यदेनᳩं शमयति ॥१२॥ ब्रह्मन्नि-
त्येव पञ्चममामन्त्रयते । त्वं ब्रह्मासीतीतरो निरुक्तं प्रत्याह परिमितं वै
निरुक्तं तत्परिमितमेवास्मिन्नेतत्पूर्वं वीर्यं दधात्यथात्रानिरुक्तं प्रत्या-
हापरिमितं वाऽअनिरुक्तं तदपरिमितमेवास्मिन्नेतत्सर्वं वीर्यं दधाति
तस्मादत्रानिरुक्तं प्रत्याह ॥१३॥ अथ सुमङ्गलनामानᳩं ह्वयति ।
'बहुकार श्रेयस्कर भूयस्करे"ति यऽएवं नामा भवति कल्याणमेवै-
तन्मानुष्यै वाचो वदति ॥१४॥ अथास्मै ब्राह्मणः स्फ्यं प्रयच्छति ।
अध्वर्युर्वा यो वास्य पुरोहितो भवती"न्द्रस्य वज्रोऽसि तेन मे
रध्ये"ति वज्रो वै स्फ्यः सऽएतेन वज्रेण ब्राह्मणो राजानमात्म-
नोऽबलीयाᳩंसं कुरुते यो वै राजा ब्राह्मणादबलीयानमित्रेभ्यो वै
स बलीयान् भवति तदमित्रेभ्य ऽएवैनमेतद्बलीयाᳩंसं करोति ॥१५॥
तᳩं राजा राजभ्रात्रे प्रयच्छति । इन्द्रस्य वज्रोऽसि तेन मे रध्येति
तेन राजा राजभ्रातरमात्मनोऽबलीयाᳩंसं कुरुते ॥१६॥ तᳩं राज-
भ्राता सूताय वा स्थपतये वा प्रयच्छति । इन्द्रस्य वज्रोऽसि तेन
मे रध्येति तेन राजभ्राता सूतं वा स्थपतिं वात्मनोऽबलीयाᳩंसं
कुरुते ॥१७॥ तᳩं सूतो वा स्थपतिर्वा ग्रामण्ये प्रयच्छति । इन्द्रस्य
वज्रोऽसि तेन मे रध्येति तेन सूतो वा स्थपतिर्वा ग्रामण्यमात्म-
नोऽबलीयाᳩंसं कुरुते ॥१८॥ तं ग्रामणीः सजाताय प्रयच्छति ।
इन्द्रस्य वज्रोऽसि तेन मे रध्येति तेन ग्रामणीः सजातमात्मनोऽब-
लीयाᳩंसं कुरुते तद्यदेवᳩं सम्प्रयच्छन्ते नेत्पापवस्यसमसद्यथापूर्व-

२, ४. मा. सं. १०. २८.   ३. प्रत्याह ति. च   ५. वदति इति च.
भवति इति. ग, घ.   ७. मा. सं. १०. २८.   ८. तᳩं इति. ग.
प्रयच्छिति इति. ग.   १०. तेन इति. क. ग. घ. ११. [illegible]

मसदिति तस्मादेवᳪं सम्प्रयच्छन्ते[1] ॥१९॥ अथ सजातश्च प्रतिप्रस्थाता च । एतेन स्फ्येन पूर्व्वाग्नौ शुक्रस्य पुरोरुचाऽधिदेवेनं कुरुतोऽस्ता वै शुक्रोऽस्तारमेवैतत्कुरुतः[2] ॥२०॥ अथ मान्थिनः पुरोरुचा ङ्विमितं ङ्विमिनुतः । आद्यो वै मन्थी तदस्तारमेवैतत्कृत्वाथास्माऽएतदाद्यं जनयतस्तस्मान्मान्थिनः पुरोरुचा ङ्विमितं ङ्विमिनुतः[3] ॥२१॥ अथा[4]ध्वर्युः । चतुर्गृहीतमाज्यं गृहीत्वाधिदेवने हिरण्यं निधाय जुहोत्य-"ग्नि[5]ः पृथुर्द्धर्मणस्पतिर्जुषाणोऽअग्निः पृथुर्द्धर्मणस्पतिराज्यस्य व्वेतु स्वाहे[6]"ति ॥२२॥ अथाक्षान्निवपति । "स्वा[7]हाकृताः सूर्यस्य रश्मिभिर्यतध्वᳪं सजातानां मध्यमेष्ठ्याये"त्येष वाऽअग्निः पृथुर्य्यदधिदेवनं तस्यैतेऽङ्गारा य्यदक्षास्तमेवैतेन प्रीणाति तस्य ह वाऽएषानुमता गृहेषु हन्यते य्यो वा राजसूयेन य्यजते य्यो वैतदेवं व्वेदैतेष्वक्षेष्वाह गां दीव्यध्वामिति पूर्व्वाग्निवाहौ दक्षिणा[8] ॥२३॥ अथाहा'ग्नये स्विष्टकृतेऽनुब्रूही'ति । तद्यदन्तरेणाहुतीऽएतत्कर्म क्रियतऽएष वै प्रजापतिर्य्यऽएष य्यज्ञस्तायते य्यस्मादिमाः प्रजा[9]ः प्रजाताऽएतम्वेवाप्येतर्ह्यनु प्रजायन्ते तदेनं मध्यतऽएवैतस्य प्रजापतेर्द्दधाति मध्यतः स्रुवति तस्मादन्तरेणाहुतीऽएतत्कर्म क्रियतऽआश्राव्याहा'ग्निᳪं स्विष्टकृतं य्यजे'ति व्वषट्कृते जुहोति ॥२४॥ अथेडामाद[10]धाति । उपहूतायामिडायामप ऽउपस्पृश्य माहेन्द्रं ग्रहं गृह्णाति माहेन्द्रं ग्रहं गृहीत्वा स्तोत्रमुपाकरोति तᳪं स्तोत्राय प्रमीवाति सऽउपावरोहति सोऽन्ते स्तोत्रस्य भवत्यन्ते शस्त्रस्य ॥२५॥ Cf. का. श. ७. ३. ४ ; मै. सं. २. ६. १२ ; तै. सं. १. ८. १६ ; काठ. १५. ८.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे पञ्चमकाण्डे
चतुर्थप्रपाठके प्रथमं ब्राह्मणम् ॥ (अ. ४. ४.)

१. संप्रयच्छन्ति इति च, सम्प्रयच्छन्ते इति.क. २. कुरुतः इति. ग.
३. बिमिनुत इति ग, विमिनुत इति.च. ४. अथाध्वर्युः इति. ग.
५. मा. सं. १०. २९. ६. स्वाहेति. ग, स्वाहेति. क,च. ७. मा. सं. १०. २९.
८. दक्षिणा इति. ग. ९. प्रजा इति. क. १०. मादधाति इति. च

५. ४. २.

( संसृपांहवींषि, दशपेयश्च )

वरुणाद्ध वाऽअभिषिषिचानाद्भर्गोऽपचक्राम । वीर्यं वै भर्ग-ऽएष विष्णुर्यज्ञः सोऽस्मादपचक्राम शश्वद्धऽएषोऽपाᳪ रसः सम्भृतो भवति येनैनमेतदभिषिञ्चति सोऽस्य भर्गं निर्ज्जघान ॥१॥ तमेताभिर्देवताभिरनुसमसर्पत् । सवित्रा प्रसवित्रा सरस्वत्या वाचा त्वष्ट्रा रूपैः पूष्णा पशुभिरिन्द्रेणास्मे बृहस्पतिना ब्रह्मणा वरुणेनौजसाग्निना तेजसा सोमेन राज्ञा विष्णुनैव दशम्या देवतयान्वविन्दत् ॥२॥ तद्यदेनमेताभिर्देवताभिरनुसमसर्पत् । तस्मात्सᳪसृपो नामाथ यद्दशमेऽहन् प्रसुतो भवति तस्माद्दशपेयोऽथो यद्दश दशैकैकं चमसमनुप्रसृप्ता भवन्ति तस्माद्वेव दशपेयः ॥३॥ तदाहुः । दश पितामहान्त्सोमपान्त्संख्याय प्रसर्पेत्तथो हास्य सोमपीथमश्नुते दशपेयो हीति तद्वै ज्या द्वौ त्रीनित्येवे पितामहान्त्सोमपान्विन्दन्ति तस्मादेताऽएव देवताः संख्याय प्रसर्पेत् ॥४॥ एताभिर्वै देवताभिर्वरुणऽएतस्य सोमपीथमाश्नुत । तथोऽएवैषऽएताभिरेव देवताभिरेतस्य सोमपीथमश्नुते तस्मादेताऽएव देवताः संख्याय प्रसर्पेदथ यदेवैषोदवसानीयेष्टिः सन्तिष्ठतऽएतस्याभिषेचनीयस्य ॥५॥ अथैतानि हवीᳪषि निर्व्वपति । सावित्रं द्वादशकपालं वाष्टाकपालं वा पुरोडाशᳪ सविता वै देवानां प्रसविता सवितृप्रसूतऽएव तद्वरुणोऽनुसमसर्प्पत्तथोऽएवैषऽएतत्सवितृप्रसूतऽएवानु सᳪसर्पति तत्रैकं पुण्डरीकं प्रयच्छति ॥६॥ अथ सारस्वतं चरुं निर्व्वपति । वाग्वै सरस्वती वाचैव तद्वरुणोऽनुसमसर्प्पत्तथोऽएवैष ऽएतद्वाचैवानुसᳪसर्प्पति तत्रैकं पुण्डरीकं प्रयच्छति ॥७॥ अथ त्वाष्ट्रं दशकपालं पुरोडाशं निर्व्वपति । त्वष्टा वै रूपाणामीष्टे त्वष्ट्रैव तद्रूपैर्वरुणो

१. भवति इति. ग, घ. २. त्रीनित्येव पितामहान् इति. ग. ३. एतस्येति.ग.
४. नीयस्य इति. क, च. ५. प्रयच्छति इति. च. एवमेवाऽग्रेऽपि ।

ऽनुसमसर्पंस्तथोऽएवैषऽएतत्त्वष्ट्रैव रूपैरनुसꣳसर्प्पति तत्रैकं पुण्ड-
रीकं प्रयच्छति ॥८॥ अथ पौष्णं चरुं निर्व्वपति । पशवो वै पूषा
पशुभिरेव तद्वरुणोऽनुसमसर्प्पंस्तथोऽएवैषऽएतत्पशुभिरेवानुसꣳस-
र्प्पति तत्रैकं पुण्डरीकं प्रयच्छति[1] ॥९॥ अथैन्द्रमेकादशकपालं पुरो-
डाशं निर्व्वपति । इन्द्रियं वै व्वीर्यमिन्द्रऽइन्द्रियेणैव तद्वीर्येण व्व-
रुणोऽनुसमसर्प्पंस्तथोऽएवैषऽएतदिन्द्रियेणैव व्वीर्येणानुसꣳसर्प्पति
तत्रैकं पुण्डरीकं प्रयच्छति ॥१०॥ अथ बार्हस्पत्यं चरुं निर्व्वपति ।
ब्रह्म वै बृहस्पतिर्ब्रह्मणैव तद्वरुणोऽनुसमसर्प्पंस्तथोऽएवैष[2]ऽएतद्ब्रह्म-
णैवानुसꣳसर्प्पति तत्रैकं पुण्डरीकं प्रयच्छति ॥११॥ अथ व्वारुणं
य्यवमयं चरुं निर्व्वपति । स य्येनैवौजसेमाः प्रजाः व्वरुणोऽगृह्णा-
त्तेनैव तदोजसा व्वरुणोऽनुसमसर्प्पंस्तेनोऽएवैष[3]ऽएतदोजसानुसꣳ
सर्प्पति तत्रैकं पुण्डरीकं प्रयच्छति ॥१२॥ उपसदो दशम्यो देवताः ।
तत्र पञ्च पुण्डरीकाण्युपप्रयच्छति तां द्वादश पुण्डरीकाꣳ स्रजं प्रति-
मुञ्चते सा दीक्षा तया दीक्षया दीक्षते[4] ॥१३॥ अथ य्यद्द्वादश भ-
वन्ति । द्वादश वै मासाः संवत्सरस्य सर्व्वं वै संवत्सरः सर्व्वेणैवै-
नमेतद्दीक्षयति य्यानि पुण्डरीकाणि तानि दिवो रूपं तानि नक्षत्रा-
णाꣳ रूपं य्ये व्वधकास्तेऽन्तरिक्षस्य रूपं य्यानि बिसानि तान्यस्यै
तदेनमेषु लोकेष्वधि दीक्षयति[5] ॥१४॥ अथ राजानं क्रीत्वा । द्वेधो-
पनह्य परिवहन्ति ततोऽर्द्धमासन्द्यामासाद्य प्रचरत्यथ य्यऽएषोऽर्द्धो-
ब्रह्मणो गृहे निहितो भवति तमासन्द्यामासाद्यातिथ्येन प्रचरति य्य-
दातिथ्येन प्रचरत्यथोपसद्भिः[6] प्रचरति य्यदोपसद्भिः प्रचरन्ति[7] ॥१५॥
अथैतानि हवीꣳषि निर्व्वपति । आग्नेयमष्टाकपालं पुरोडाशꣳ सौम्यं
चरुं व्वैष्णवं त्रिकपालं वा पुरोडाशं[8] चरुं वा तेन य्यथेष्ट्यैवं य्यज-

---

१. प्रयच्छति इति. क. २. एवैष इति. ग. ३. एवैष तदोजसा इति. ग, घ.
४. दीक्षते इति. ग. ५. दीक्षयति. इति. क, च.
६. प्रचरत्यथोपसद्भिः प्रचरति यदोपसद्भिः प्रचरति इति. ग.
७. प्रचरति, प्रचरति इति. च. ८. पुरोडाशं चरुं इति. ग, घ.

ते ॥१६॥ तदु तथा न कुर्यात् । ह्वलति वाऽएष यो यज्ञपथादेत्येति वा ऽएष यज्ञपथाद्य ऽउपसत्पथादेति तस्मादुपसत्पथादेव नेयात् ॥१७॥ स यदग्निं यजति । अग्निनैवैतत्तेजसानुसꣳसर्पत्यथ यत्सोमं यजति सोमेनैवैतद्राज्ञानुसꣳसर्पत्यथ यद्विष्णुं यजति यज्ञो वै विष्णुस्तद्यज्ञं प्रत्यक्षमाप्नोति तं प्रत्यक्षमाप्त्वात्मन् कुरुते ॥१८॥ स ऽएष सप्तदशोऽग्निष्टोमो भवति । सप्तदशो वै प्रजापतिः प्रजापतिर्यज्ञस्तद्यज्ञं प्रत्यक्षमाप्नोति तं प्रत्यक्षमाप्त्वात्मन् कुरुते ॥१९॥ तस्य द्वादश प्रथमगर्भाः पष्ठौह्यो दक्षिणा । द्वादश वै मासाः संवत्सरस्य संवत्सरः प्रजापतिः प्रजापतिर्यज्ञस्तद्यज्ञं प्रत्यक्षमाप्नोति तं प्रत्यक्षमाप्त्वात्मन् कुरुते ॥२०॥ तासां द्वादश गर्भाः । ताश्चतुर्विंꣳशतिश्चतुर्विंꣳशतिर्वै संवत्सरस्यार्द्धमासाः संवत्सरः प्रजापतिः प्रजापतिर्यज्ञस्तद्यज्ञं प्रत्यक्षमाप्नोति तं प्रत्यक्षमाप्त्वात्मन् कुरुते ॥२१॥ ता ब्रह्मणे ददाति ब्रह्मा हि यज्ञं दक्षिणतोऽभिगोपायति तस्मात्ता ब्रह्मणे ददा। हिरण्मयीꣳस्रजमुद्गात्रे रुक्मꣳ होत्रे हिरण्मयौ प्राकाशावध्वर्युभ्यामश्वं प्रस्तोत्रे वशां मैत्रावरुणायर्षभं ब्राह्मणाच्छꣳसिने वाससी नेष्टापोतृभ्यामन्यतरतो युक्तं यवाचितमच्छावाकाय गामग्नीधे ॥२२॥ वाऽएताः । द्वादश वा त्रयोदश वा दक्षिणा भवन्ति द्वादश वा त्रयोदश वा संवत्सरस्य मासाः संवत्सरः प्रजापतिः प्रजापतिर्यज्ञस्तद्यज्ञं प्रत्यक्षमाप्नोति तं प्रत्यक्षमाप्त्वात्मन् कुरुते ॥२३॥ Cf. का. ७. ४. १ ; तै. सं. १. ८. १८.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे पञ्चमकाण्डे चतुर्थप्रपाठके द्वितीयं ब्राह्मणम् ॥ (अ. ४. ५.)

( इति चतुर्थोऽध्यायः )

---

न कुर्यात् ह्वलति वा इति. ग, घ. २. स इति. ग, घ.
कुरुते इति घ. ४. प्रजापतिरिति. घ. ५. श्चतुर्विंꣳशतिरिति ग, घ.
रुक्मꣳइति. ग, घ. ७. प्रस्तोत्रे इति. ग. ७. एताः इति. ग

## ५. ४. ३.

### ( पञ्चबिलसंज्ञकश्चरुः )

आग्नेयोऽष्टाकपालः पुरोडाशो भवति । तं पूर्वार्द्धऽआसादयत्यैन्द्रऽएकादशकपालः पुरोडाशो भवति सौम्यो वा चरुस्तं दक्षिणार्द्धऽआसादयति वैश्वदेवश्चरुर्भवति तं पश्चार्द्धऽआसादयति मैत्रावरुणी पयस्या भवति तामुत्तरार्द्धऽआसादयति बार्हस्पत्यश्चरुर्भवति[1] तं मध्यऽआसादयत्येष चरुः पञ्चबिलस्तद्यत्पञ्च हवीँषि भवन्ति तेषां पञ्च बिलानि तस्माच्चरुः पञ्चबिलो नाम ॥१॥ तद्यदेतेन राजसूययाजी यजते यद्वेवैनं[2] दिशः समारोहयति यदृतून् यस्तोमान्यच्छन्दाँसि तस्माद्वेवैनमेतेन निष्क्रीणाति स यद्धैतेन राजसूययाजी न यजेतोद्वा ह माद्येत्प्र वा पतेत्तस्माद्वाऽएतेन राजसूययाजी यजते ॥२॥ स यदाग्नेयेनाष्टाकपालेन पुरोडाशेन प्रचरति । यद्वेवैनं प्राचीं दिशँ समारोहयति यदृतून्यत्स्तोमान्यच्छन्दाँसि तस्माद्वेवैनमेतेन निष्क्रीणाति सꣳस्रवं बार्हस्पत्ये चराववनयति[3] ॥३॥ अथ यदैन्द्रेणैकादशकपालेन पुरोडाशेन प्रचरति । सौम्येन वा चरुणा यद्वेवैनं दक्षिणां दिशꣳसमारोहयति यदृतून्यत्स्तोमान्यच्छन्दाꣳसि तस्माद्वेवैनमेतेन निष्क्रीणाति सꣳस्रवं बार्हस्पत्ये चराववनयति ॥४॥ अथ यद्वैश्वदेवेन चरुणा प्रचरति[4] । यद्वेवैनं प्रतीचीं दिशꣳसमारोहयति यदृतून्यत्स्तोमान्यच्छन्दाँसि तस्माद्वेवैनमेतेन निष्क्रीणाति सꣳस्रवं बार्हस्पत्ये चराववनयति ॥५॥ अथ यन्मैत्रावरुण्या पयस्यया प्रचरति । यद्वेवैनमुदीचीं दिशꣳ समारोहयति यदृतून्यत्स्तोमान्यच्छन्दाँसि[5] तस्माद्वेवैनमेतेन निष्क्रीणाति सꣳस्रवं बार्हस्पत्ये चराववनयति तद्यत्सँस्रवान् बार्हस्पत्ये चराववनयति सर्वत ऽएवास्मिन्नेतदन्नाद्यं दधाति तस्मादु दिशो दिशऽएव राज्ञे-

१. चरुरिति. घ. २. यदेवैनमिति. ग, घ. ३. ववनयति इति. च. एवमेवाग्रेऽपि
४. प्रचरति इति. ग, घ. ५. स्तोमानिति. ग.

ाद्यमभिह्रियते[1] ॥६॥ अथ यद्बार्हस्पत्येन चरुणा प्रचरति। यदे-
मूर्ध्वां दिशꣳ समारोहयति यदृतून् यत्स्तोमान्यच्छन्दाꣳसि
मादेवैनमेतेन निष्क्रीणाति ॥७॥ स यऽएषऽआग्नेयोऽष्टाकपालः
ोडाशो भवति। तस्य हिरण्यं दक्षिणाग्नेयो वाऽएष यज्ञो भव-
ते रेतो हिरण्यं तस्माद्धिरण्यं दक्षिणा तदग्नीधे ददात्यग्निर्वाऽ
निदानेन यदाग्नीध्रस्[2]तस्मात्तदग्नीधे ददाति[3] ॥८॥ अथ यऽएषऽ-
[4] ऽएकादशकपालः पुरोडाशो भवति। तस्यर्षभो दक्षिणा स
द्रो यदृषभो यद्धु सौम्यश्चरुर्भवति तस्य बभ्रुर्गौर्दक्षिणा स हि
म्यो यद्बभ्रुस्तं ब्रह्मणे ददाति ब्रह्मा हि यज्ञं दक्षिणतोऽभिगो-
ाति तस्मात्तं ब्रह्मणे ददाति ॥९॥ अथ यऽएष वैश्वदेवश्चरु-
ति। तस्य[5] पृषन् गौर्दक्षिणा भूमा वाऽएतद्रूपाणां यत्पृषतो गो-
शो वै विश्वे देवा भूमा[6] वै विट् तस्मात्पृषन् गौर्दक्षिणा तꣳ
ददाति होता हि भूमा तस्मात्तꣳ होत्रे ददाति ॥१०॥ अथ
मैत्रावरुणी पयस्या भवति। तस्यै वशा दक्षिणा सा हि मैत्रा-
ाी यद्वशा यदि वशां न विन्देदपि यैव का चाप्रवीता स्या-
र्वा ह्येवं[7] वशाप्रवीता तामध्वर्युभ्यां ददाति प्राणोदानौ वाऽअ-
प्राणोदानौ मित्रावरुणौ तस्मात्तामध्वर्युभ्यां ददाति ॥११॥ अथ
एष बार्हस्पत्यश्चरुर्भवति। तस्य[8] शितिपृष्ठो गौर्दक्षिणैषा वाऽ-
ा बृहस्पतेर्दिक्तदेष[9]ऽउपरिष्टादर्यम्णः पन्थास्तस्माच्छितिपृष्ठो बार्ह-
त्यस्य दक्षिणा तं ब्रह्मणे ददाति बृहस्पतिर्वै[10] देवानां ब्रह्मैष वाऽ-
स्य ब्रह्मा भवति तस्मात्तं ब्रह्मणे ददाति स हैतेनापि विष्ठाव्रा-
[11]ाद्यकामो यजेत तदस्मिन्त्सर्वतोऽन्नाद्यं[12] दधाति[13] स ह्यन्नादऽएव

१. ह्रियते इति. क, च. २. यदाग्नीध्र इति. ग. ३. ददाति इति.च.एवमग्रेऽपि
४. हैन्द्र इति. ग, घ. ५. तस्य इति. ग. ६. भूमो वै इति. क.
७. ह्येव इति. ग, घ. ८. तस्य इति. ग. ९. तदेष इति. ग.
१०. बृहस्पतिर्वै देवानां इति. ग, घ. ११. न्नाद्यकाम इति. ग, घ.
१२. आद्यं इति. ग, घ. १३. ददाति. इति. च.

भवति ॥१२॥ Cf. का. श. ७. ४. २ ; मै. सं. २. ६. १३ ; तै. सं. १. ८. १९ ; काठ. १५. ८.

इति माध्यदिनशाखीये शतपथब्राह्मणे पञ्चमकाण्डे
चतुर्थप्रपाठके तृतीयं ब्राह्मणम् ॥ ( अ. ५. १. )

५. ४. ४.

( प्रयुजांहवींषि )

स वै प्रयुजाᳪं हविर्भिर्यजते । तद्यत्प्रयुजाᳪं हविर्भिर्यजत ऽऋतून्वाऽएतत्सुषुवाणो युङ्क्ते तऽएनमृतवो युक्ता वहन्त्यृतून्वा प्रयुक्ताननुचरति तस्मात्प्रयुजाᳪं हविर्भिर्यजते ॥१॥ तानि वै द्वादश भवन्ति । द्वादश वै मासाः संवत्सरस्य तस्माद्द्वादश भवन्ति मासि मासि यजेतेत्याहुः को वेद मनुष्यस्य तस्मान्न मासि मासि यजेत शम्यापराव्याधे शम्यापराव्याधऽएव षड्भिर्यजते प्राङ् यानथ पुनरावृत्तः शम्यापराव्याधे शम्यापराव्याधऽएव षड्भिर्यजते ॥२॥ तदु तथा न कुर्यात् । षडेवैतानि पूर्व्वाणि हवीᳪंषि निर्व्वपति समानबर्हीᳪंषि तासां देवतानाᳪं रूपं यथा शिशिरे युक्त्वा प्राञ्चऽआप्रावृषं यायुस्तत्षड्तून्युङ्क्ते तऽएनᳪं षड्तवो युक्ताः प्राञ्चऽआप्रावृषं वहन्ति षड्वर्तून् प्रयुक्तानाप्रावृषमनुचरति पूर्व्वाग्निवाहौ द्वौ दक्षिणा ॥३॥ षडेवोत्तराणि हवीᳪंषि निर्व्वपति । समानबर्हीᳪंषि तासां देवतानाᳪं रूपं यथा पुनरावर्तैरन्वार्षिकमभि तत्षड्तून्युङ्क्ते तऽएनᳪं षड्तवो युक्ता वार्षिकमभिवहन्ति षड्वर्तून् प्रयुक्तान्वार्षिकमनुचरति पूर्व्वाग्निवाहौ द्वौ दक्षिणा तद्यत्पूर्व्वाग्निवाहो दक्षिणर्तून्वा ऽएतत्सुषुवाणो युङ्क्ते वहन्ति वाऽअनड्वाहस्तस्मात्पूर्व्वाग्निवाहो दक्षिणा ॥४॥ तद्ध स्मैतत्पुरा कुरुपञ्चालाऽआहुः । ऋतवो

१. तद्यदिति. क. २. षड्वर्तूनिति क. ३. नबर्हींषि इति. ग, घ.

ऽअस्मान्युक्ता व्वहन्त्यृतून्वा प्रयुक्ताननुचराम ऽइति व्यदेषा ँ जानो राजसूययाजिन ऽआसुस्तद्ध स्म तदभ्याहुः ॥५॥ आग्नेयोऽ-कपालः पुरोडाशो भवति । सौम्यश्चरुः सावित्रो द्वादशकपालो[1] ष्टाकपालो वा पुरोडाशो बार्हस्पत्यश्चरुस्त्वाष्ट्रो दशकपालः पुरोडा-व्वैश्वानरो द्वादशकपालऽएतानि षट् पूर्व्वाणि हवी ँ षि भवन्ति[2] ॥६॥

( अर्द्धप्रपाठकः ६६, शतं ३३०० )

षडेवोत्तरे चरवः । सारस्वतश्चरुः पौष्णश्चरुर्मैत्रश्चरुः क्षैत्रप-श्चरुर्व्वारुणश्चरुरादित्यश्चरुरेत ऽउ षडुत्तरे चरवः[3] ॥७॥ अथ श्ये-व्विचित्रगर्भामदित्याऽआलभते । तस्याऽएवैवावृधाष्टापद्यै व्व-थाऽइयं वाऽअदितिरस्या ऽएवैनमेतद्गर्भं[4] करोति तस्या ऽएता-येव श्येनी व्विचित्रगर्भा दक्षिणा[5] ॥८॥ अथ पृषतीं व्विचित्रगर्भां रुद्भ्यऽआलभते । तस्याऽएवैवावृद्विशो वै मरुतो व्विशामेवैनमे-गर्भं करोति तस्याऽएतादृश्येव पृषती व्विचित्रगर्भा दक्षिणा ॥९॥ ौ पशुबन्धौ । तदेतावेव[6] सन्तावन्यथेवालभन्ते यामदित्याऽआल-त ऽआदित्येभ्यस्तामालभन्ते सर्व्वं वा ऽआदित्याः सर्वस्यैवैनमे-गर्भं करोति यां मरुद्भ्यऽआलभन्ते व्विश्वेभ्यस्तां देवेभ्यऽआल-ते सर्व्वं वै व्विश्वे देवाः सर्व्वस्यैवैनमेतद्गर्भं करोति ॥१०॥ Cf. श. ७. ४. ३; मै. सं. २. ६. १३; तै. सं. १. ८. १९.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे पञ्चमकाण्डे
चतुर्थप्रपाठके चतुर्थं ब्राह्मणम् ॥ ( अ. ५. २. )

५. ४. ५.

( केशवपनीयः )

अभिषेचनीयेनेष्ट्वा[7] । केशान्न व्वपते तद्यत्केशान्न व्वपते व्वीर्यं

१. द्वादश इति. घ.   २. भवन्ति इति. ग, घ.   ३. चरव इति. क, घ.
४. गर्भमिति. ग.   ५. दक्षिणा इति. क, ग.   ६. तदेताविति. ग.
७. नेष्ट्वा इति. ग, घ.

वाऽएतदपाᳬं रसः सम्भृतो भवति य्येनैनमेतदभिषिञ्चति तस्याभिषिक्तस्य केशान् प्रथमान् प्राप्नोति स य्यत्केशान् व्वपेतैताᳬं श्रियं जिह्मां व्विनाशयेद्व्युदुह्यात्तस्मात्केशान्न व्वपते ॥१॥ संवत्सरं न व्वपते । संवत्सरसम्मिता वै व्व्रतचर्या तस्मात्संवत्सरं न व्वपते सऽएष व्व्रतविसर्जनीयोपयोगो नाम स्तोमो भवति केशवपनीयः ॥२॥ तस्यैकविᳬंशं प्रातः सवनᳬं । सप्तदशं माध्यन्दिनᳬं सवनं पञ्चदशं तृतीयसवनᳬं सहोक्थैः सह षोडशिना सह रात्र्या ॥३॥ त्रिवृद्राथन्तरः सन्धिर्भवति । एषऽएवैकविᳬंशो[1] य्यऽएष तपति सऽएतस्मादेकविᳬंशादुप[2] युङ्क्ते स सप्तदशमभिप्रत्यवैति सप्तदशात्पञ्चदशं पञ्चदशादस्यामेव त्रिवृति प्रतिष्ठायां प्रतितिष्ठति ॥४॥ तस्य रथन्तरं पृष्ठं[3] भवति । इयं वै रथन्तरमस्यामेवैतत्प्रतिष्ठायां प्रतितिष्ठत्यतिरात्रो भवति प्रतिष्ठा वाऽअतिरात्रस्तस्मादतिरात्रो भवति ॥५॥ स वै न्येव व्वर्तयते । केशान्न[4] व्वपते व्वीर्यं वाऽएतदपाᳬं रसः सम्भृतो भवति य्येनैनमेतदभिषिञ्चति तस्याभिषिक्तस्य केशान् प्रथमान् प्राप्नोति स यत्केशान् व्वपेतैताᳬं श्रियं जिह्मां व्विनाशयेद्व्युदुह्यादथ य्यन्निवर्त्तयते तदात्मन्येवैताᳬं श्रियं नियुनक्ति तस्मान्न्येव[5] व्वर्तयते केशान्न व्वपते तस्यैषैव व्रतचर्या भवति यावज्जीवं नास्यां प्रतितिष्ठति ॥६॥ आसन्द्याऽउपानह्याऽउपमुञ्चते । उपानद्भ्यामधि य्यदस्य य्यानं भवति रथो वा किञ्चिद्वा सर्व्वं वाऽएषऽइदमुपर्युपरि भवत्यर्व्वागेवास्मादिदᳬं[6] सर्व्वं भवति य्यो राजसूयेन य्यजते तस्मादस्यैषैव व्व्रतचर्या भवति यावज्जीवं नास्यां प्रतितिष्ठति ॥७॥ Cf. का. श. ७. ५ २.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे पञ्चमकाण्डे चतुर्थप्रपाठके पञ्चमं ब्राह्मणम् ॥ ( अ. ५. ३. )

---

१. एवैक इति. ग, घ. २. एतस्मादिति. ग ३. पृष्ठमिति. ग, घ.
४. केशान्न वपत इति. च. ५. न्येव इति. क, घ. ६. दिदᳬं इति क.

## ५. ४. ६.

### ( सौत्रामणी )

श्येतऽआश्विनो भवति । श्येताविव ह्याश्विनावविर्मल्हा सारस्वती भवत्यृषभमिन्द्राय सुत्राम्णऽआलभते दुर्वेदाऽएवꣳ समृद्धाः पशवो यद्येवꣳ समृद्धान्न विन्देदप्यजानेवालभेरंस्ते हि शुभ्रपतरा भवन्ति स यद्यजानालभेरंल्लोहितऽआश्विनो भवति तद्यदेतया यजते ॥१॥ त्वष्टुर्ह वै पुत्रः । त्रिशीर्षा षडक्षऽआस तस्य त्रीण्येव मुखान्यासुस्तद्यदेवꣳ रूपऽआस तस्माद्विश्वरूपो नाम ॥२॥ तस्य सोमपानमेवैकं मुखमास । सुरापाणमेकमन्यस्माऽअशनायैकं तमिन्द्रो दिद्वेष तस्य तानि शीर्षाणि प्रचिच्छेद ॥३॥ स यत्सोमपानमास । ततः कपिञ्जलः समभवत्तस्मात्स बभ्रुकऽइव बभ्रुरिव हि सोमो राजा ॥४॥ अथ यत्सुरापाणमास । ततः कलविङ्कः समभवत्तस्मात्सोऽभिमाद्यत्कऽइव वदत्यभिमाद्यन्निव हि सुरां पीत्वा वदति ॥५॥ अथ यदन्यस्माऽअशनायास । ततस्तित्तिरिः समभवत्तस्मात्स विश्वरूपतमऽइव सन्त्येव घृतस्तोकाऽइव त्वन्मधुस्तोकाऽइव त्वत्पर्णेष्वाश्चुतितोऽएवꣳरूपमिव हि स तेनाशनमावयत् ॥६॥ स त्वष्टा चुक्रोध । कुविन्मे पुत्रमवधीदिति सोऽपेन्द्रमेव सोममाजह्रे स यथायꣳ सोमः प्रसुतऽएवमपेन्द्रऽएवास ॥७॥ इन्द्रो ह वाऽईक्षाञ्चक्रे । इदं वै मा सोमादन्तयन्तीति स यथा बलीयानबलीयस ऽएवमनुपहूतऽएव यो द्रोणकलशे शुक्रऽआस तं भक्षयाञ्चकार स हैनं जिहिꣳससोऽस्य विष्वङ्ङेव प्राणेभ्यो दुद्राव मुखाद्धैवास्य न दुद्राव तस्मात्प्रायश्चित्तिरास स यद्धापि मुखादद्रोष्यन्न हैव प्रायश्चित्तिरभविष्यत् ॥८॥ चत्वारो वै वर्णाः । ब्राह्मणो

---

१. भवति इति. घ.  २. विव इति. घ.  ३. सुत्राम्ण इति क, घ, च.

४. राजा इति. क, ग.  ५. वदति इति. च.  ६. माजह्रे इति. ग, घ.

७. एवास इति. च.  ८. विष्वङ्ङेवेति. ग, घ.

राजन्यो व्वैश्यः शूद्रो न हैतेषामेकश्चन भवति यः सोमं व्वमति स यद्धैतेषामेकश्चित्स्यात्स्याद्धैव प्रायश्चित्तिः ॥९॥ स यन्नस्तोऽद्रवत् । ततः सिꣳहः समभवदथ यत्कर्णाभ्यामद्रवत्ततो व्वृकः समभवदथ यदवाचः प्राणादद्रवत्ततः शार्दूलज्येष्ठाः श्वापदाः समभवन्नथ यदुत्तरात्प्राणादद्रवत्सा परिस्रुदथ त्रिर्निरष्ठीवत्ततः कुवलं कर्कन्धु बदरमिति समभवत्स सर्वेणैव व्यार्ध्यत सर्व्वꣳहि सोमः ॥१०॥ स सोमातिपूतो मङ्कुरिव चचार । तमेतयाश्विनावभिषज्यतां तꣳ सर्व्वेणैव समार्द्धयताꣳ सर्व्वꣳहि सोमः स व्वसीयानेवेष्ट्वाभवत् ॥११॥ ते देवाऽअब्रुवन् । सुत्रातं बतैनमत्रासातामिति तस्मात्सौत्रामणी नाम ॥१२॥ स हैतयापि सोमातिपूतं भिषज्येजत् । सर्व्वेण वाऽएष व्यृध्यते यꣳ सोमोऽतिपवते सर्व्वꣳ हि सोमस्तꣳ सर्व्वेणैव समर्द्धयति सर्व्वꣳहि सोमः स व्वसीयानेवेष्ट्वा भवति तस्मादु हैतयापि सोमातिपूतं भिषज्येत् ॥१३॥ तद्यदेतया राजसूययाजी यजते । सर्व्वान्वाऽएष यज्ञक्रतूनवरुन्द्धे सर्व्वाऽइष्टीरपि दर्विहोमान्यो राजसूयेन यजते देवसृष्टो वाऽएषेष्टिर्यत्सौत्रामण्यनया मेऽपीष्टमसदनयापि सूयाऽइति तस्माद्वाऽएतया राजसूययाजी यजते ॥१४॥ अथ यदाश्विनो भवति । अश्विनौ वाऽएनमाभिषज्यतां तथोऽएवैनमेषऽएतदश्विभ्यामेव भिषज्यति तस्मादाश्विनो भवति ॥१५॥ अथ यत्सारस्वतो भवति । व्वाग्वै सरस्वती व्वाचा वाऽएनमश्विनावभिषज्यतां तथोऽ एवैनमेषऽएतद्वाचैव भिषज्यति तस्मात्सारस्वतो भवति ॥१६॥ अथ यदैन्द्रो भवति । इन्द्रो वै यज्ञस्य देवता (सा सैव यज्ञस्य देवता) तयैवैनमे-

---

१. यद्धैतेषामिति. ग. २. दद्रवदिति. ग. घ. ३. मत्रासतामिति. ग, घ.
४. सौत्रामणीति. क, ग. ५. सर्वमिति. ग, घ. ६. नवरुन्द्धे इति. ग.
७. यजते इति. ग. ८. एतदश्विभ्यामिति. ग. ९, १०. भवति इति च
११. कुण्डलान्तर्गतः पाठः 'गघ' पुस्तकयोर्नाऽस्ति ।

न्द्रिषज्यति तस्मादैन्द्रो भवति ॥१७॥ एतेषु पशुषु। सिᳪंहलो-
ानि वृकलोमानि शार्दूललोमानीत्यावपत्येतद्वै ततः समभवद्यदेनᳪं
ोमोऽत्यपवत तेनैवैनमेतत्समर्द्धयति कृत्स्नं करोति तस्मादेतान्या-
पति ॥१८॥ तदु तथा न कुर्यात्। उल्कया ह स नाखिन्या पशू-
नुषुवति यऽएतानि पशुष्वावपति तस्मादु परिस्रुत्येवावपेत्तथा
ल्कया नाखिन्या पशून्नानुषुवति तथोऽएवैनᳪं समर्द्धयति कृत्स्नं
रोति तस्मादु परिस्रुत्येवावपेत् ॥१९॥ अथ पूर्वेद्युः परिस्रुतᳫं संद-
ात्य "अश्विभ्यां पच्यस्व सरस्वत्यै पच्यस्वेन्द्राय सुत्राम्णे पच्यस्वे"-
। सा यदा परिस्रुद्भवत्यथैनया प्रचरति ॥२०॥ द्वावग्नीऽउद्धर-
न्ति। उत्तरवेदावेवोत्तरमुद्धते दक्षिणं नेत्सोमाहुतीश्च सुराहुतीश्च
ह जुहवामेति तस्माद् द्वावग्नीऽउद्धरन्त्युत्तरवेदावेवोत्तरमुद्धते दक्षि-
मथ यदा वपाभिः प्रचरन्त्यथैतया परिस्रुता प्रचरति ॥२१॥ तां
भैः पावयति। पूतासदिति "वायुः पूतः पवित्रेण प्रत्यङ् सोमो-
अतिस्रुतः। इन्द्रस्य युज्यः सखे"ति तत्कुवलसक्तून् कर्कन्धुस-
न् बदरसक्तूनित्यावपत्येतद्वै ततः समभवद्यत् त्रिर्निरष्ठीवत्तेनैवैनमे-
त्समर्द्धयति कृत्स्नं करोति तस्मादेतानावपति ॥२२॥ अथ ग्रहान्
ह्णाति। एकं वा त्रीन्वैकस्त्वेव ग्रहीतव्यऽ एका हि पुरोरुग्भवत्ये-
ानुवाक्यैका याज्या तस्मादेकऽएव ग्रहीतव्यः ॥२३॥ स गृह्णाति
कुविदङ्ग यवमन्तो यवं चिद्यथा दान्त्यनुपूर्वं वियूय। इहेहैषां
णुहि भोजनानि ये बर्हिषो नम ऽउक्तिं यजन्ति। उपयामगृही-
ास्यश्विभ्यां त्वा सरस्वत्यै त्वेन्द्राय त्वा सुत्राम्ण"ऽइति यद्यु
न् गृह्णीयादेतयैव गृह्णीयादुपयामैस्तु तर्हि नाना गृह्णीयादथाहा-
विभ्याᳪं सरस्वत्याऽइन्द्राय सुत्राम्णेऽनुब्रूहीति ॥२४॥ सोऽन्वाह।
युवंᳪं सुराममश्विना नमुचावासुरे सचा। विपिपाना शुभस्पती-

१. यावपेत इति. च.  २. मा. सं. १०. ३१.  ३. यदा इति. ग.
४. प्रचरन्त्यथेति. क,च.  ५. मा. सं. १०. ३१.  ६. नावपति इति. च.
७. मा. सं. १०. ३२.  ८. यवमन्त इति. ग. घ.  ९. मा. सं. १०. ३३.

ऽइन्द्रं कर्मस्वावतमि''त्याश्राव्याहा'श्विनौ सरस्वतीमिन्द्रꣳ सुत्रामाणं यजे'ति ॥२५॥ स यजति । ''पुत्रमिव पितरावश्विनोभेन्द्रावथुः काव्यैर्दꣳसनाभिः । यत्सुरामं व्यपिबः शचीभिः सरस्वती त्वा मघवन्नभिष्णगि''ति द्विर्होता वषट्करोति द्विरध्वर्युर्जुहोत्याहरति भक्षं यद्यु त्रीन् गृह्णीयादेतस्यै वानुहोममितरौ हूयेते ॥२६॥ अथ कुम्भः । शतवितृण्णो वा भवति नववितृण्णो वा स यदि शतवितृण्णः शतायुर्वाऽअयं पुरुषः शततेजाः शतवीर्यस्तस्माच्छतवितृण्णो यद्यु नववितृण्णो नवेमे पुरुषे प्राणास्तस्मान्नववितृण्णः ॥२७॥ तꣳ शिक्योद्युतम् । उपर्युपर्याहवनीयं धारयन्ति सा या परिशिष्टा परिस्रुद्भवति तामासिञ्चति तां विक्षरन्तीमुपतिष्ठते पितृणाꣳ सोमवतां तिसृभिर्ऋग्भिः पितृणां बर्हिषदां तिसृभिर्ऋग्भिः पितृणामग्निष्वात्तानां तिसृभिर्ऋग्भिस्तद्यदेवमुपतिष्ठते यत्र वै सोमऽइन्द्रमत्यपवत स यत्पितॄनगच्छत्त्रया वै पितरस्तेनैवैनमेतत्समर्द्धयति कृत्स्नं करोति तस्मादेवमुपतिष्ठते ॥२८॥ अथैतानि हवीꣳषि निर्वपति । सावित्रं द्वादशकपालं वाष्टाकपालं वा पुरोडाशं वारुणं यवमयं चरुमैन्द्रमेकादशकपालं पुरोडाशꣳ ॥२९॥ स यत्सावित्रो भवति । सविता वै देवानां प्रसविता सवितृप्रसूतऽएवैतद्भिषज्यति तस्मात्सावित्रो भवति ॥३०॥ अथ यद्वारुणो भवति । वरुणो वाऽआर्पयिता तद्यऽएवार्पयिता तेनैवैतद्भिषज्यति तस्माद्वारुणो भवति ॥३१॥ अथ यदैन्द्रो भवति । इन्द्रो वै यज्ञस्य देवता सा यैव यज्ञस्य देवता तयैवैतद्भिषज्यति तस्मादैन्द्रो भवति ॥३२॥ स यदि हैतयापि सोमातिपूतं भिषज्येत् । इष्टाऽअनुयाजा भवन्त्यव्यूढे स्रुचावथैतैर्हविर्भिः प्रचरति पश्चाद्वै सोमोऽतिपवते पश्चादेवैनमेतेन मेधेनापिदधात्याश्विनमु तर्हि द्विकपालं पुरोडाशं निर्वपेदथ यदा वपाभिः प्रचरत्यथैतेनाश्विनेन द्विकपालेन पुरोडाशेन प्रचरति ॥३३॥

---

१. मा. सं. १०. ३४. २. सुपतिष्ठते इति. ग. ३. पुरोडाशम् इति ग, घ.
४. भवति इति च. एवमग्रेऽपि ५. स यदि इति क. ६. प्रचरन्ति इति क, च.

तदु तथा न कुर्यात् । ह्वलति वाऽएष यज्ञो यज्ञपथादेत्येति वाऽएष यज्ञपथाद्यऽएवं करोति तस्माद्यत्रैवैतेषां पशूनां व्वपाभिः प्रचरन्ति तदेवैतैर्हविर्भिः प्रचरेयुर्नो तर्ह्याश्विनं द्विकपालं पुरोडाशं निर्व्वपेत्[1] ॥३४॥ तस्य नपुꣳसको गौर्द्दक्षिणा । न वाऽएष स्त्री न पुमान् यन्न-पुꣳसको गौर्यदह पुमांस्तेन न स्त्री यदु स्त्री तेनो न पुमांस्तस्मा-न्नपुꣳसको गौर्द्दक्षिणाश्वा वा रथवाही सा हि न स्त्री न पुमान् यदश्वा रथवाही यदह रथं व्वहति तेन न स्त्री यदु स्त्री तेनो न पुमांस्तस्मादश्वा रथवाही दक्षिणा ॥३५॥ Cf. का. श. ७. ५. १.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे पञ्चमकाण्डे
चतुर्थप्रपाठके षष्ठं ब्राह्मणम् ( अ. ५. ४. )

५. ४. ७.

## ( त्रैधातव्युदवसानीया )

ऐन्द्रावैष्णवं द्वादशकपालं पुरोडाशं निर्व्वपति । तद्यदेतया यज-जते व्वृत्रे ह वाऽइदमग्रे सर्व्वमास यदृचो यद्यजूꣳषि यत्सामानि तस्माऽइन्द्रो व्वज्रं प्राजिहीर्षत् ॥१॥ सह विष्णुमुवाच । व्वृत्राय वै व्वज्रं प्रहरिष्याम्यनु मा तिष्ठस्वेति तथेति ह विष्णुरुवाचानु त्वा स्थास्ये प्रहरेति तस्माऽइन्द्रो व्वज्रमुद्ययाम स ऽउद्यताद्वज्रा-द्वृत्रो बिभयाञ्चकार ॥२॥ स होवाच[2] । अस्ति वाऽइदं व्वीर्यं तन्नु ते प्रयच्छानि मा नु[3] मे प्रहार्षीरिति तस्मै यजूꣳषि प्रायच्छत्तस्मै द्वितीयमुद्ययाम ॥३॥ स होवाच । अस्ति वाऽइदं व्वीर्यं तन्नु ते प्रयच्छानि मा नु मे प्रहार्षीरिति तस्माऽऋचः प्रायच्छत्तस्मै तृतीय-मुद्ययाम ॥४॥ स[4] होवाच । अस्ति वाऽइदं व्वीर्यं तन्नु ते प्रयच्छानि[5] मा नु मे प्रहार्षीरिति तस्मै सामानि प्रायच्छत्तस्मादप्येतर्ह्येवमेवैते-

१. निर्वपेदिति. ग, घ. २. होवाच । अस्ति इति. ख. एवमग्रेऽपि

३. मा तु इति. घ, च. ४. स होवाचेति नास्ति 'घच' पुस्तकयोः ।

५. प्रयच्छामि इति. ग.

वेदैर्यज्ञं तन्वते यजुर्भिरेवाग्रेऽथर्ग्भिरथ सामभिरेवꣳ ह्यस्माऽएतत्प्रायच्छत् ॥५॥ तस्य सो योनिराशय ऽआस । तमनुपरामृश्य संलुप्याच्छिनत्सैषेष्टिरभवत्तद्यदेतस्मिन्नाशये त्रिधातुरिवैषा विद्याशेत तस्मात्त्रैधातवी नाम ॥६॥ अथ यदैन्द्रावैष्णवꣳ हविर्भवति । इन्द्रो हि वज्रमुदयच्छद्विष्णुरन्वतिष्ठत ॥७॥ अथ यद्द्वादशकपालो भवति । द्वादश वै मासाः संवत्सरस्य संवत्सरसम्मितैषेष्टिस्तस्माद्द्वादशकपालो भवति ॥८॥ तमुभयेषां व्रीहियवाणां गृह्णाति । व्रीहिमयमेवाग्रे पिण्डमधिश्रयति तद्यजुषाꣳ रूपमथ यवमयं तदृचाꣳ रूपमथ व्रीहिमयं तत्साम्नाꣳ रूपं तदेतत् त्रय्यै विद्यायै रूपं क्रियते सैषा राजसूययाजिनऽउदवसानीयेष्टिर्भवति ॥९॥ सर्वान्वाऽएष यज्ञक्रतूनवरुन्धे । सर्वाऽइष्टीरपि दर्विहोमान्यो राजसूयेन यजते तस्य यातयामेव यज्ञो भवति सोऽस्मात्पराङिव भवत्येतावान्वै सर्वो यज्ञो यावानेष त्रयो वेदस्तस्यै तद्रूपं क्रियतऽएष योनिराशयस्तदेतेन त्रयेण वेदेन पुनर्यज्ञमारभते तथास्यायातयामा यज्ञो भवति तथोऽअस्मान्न पराङ् भवति ॥१०॥ सर्वान्वाऽएष यज्ञक्रतूनवरुन्धे । सर्वाऽइष्टीरपि दर्विहोमान्यो राजसूयेन यजते देवसृष्टो वाऽएषेष्टिर्यत् त्रैधातव्यनया मेऽपीष्टमसदनयापि सूयाऽइति तस्माद्वाऽएषा राजसूययाजिनऽउदवसानीयेष्टिर्भवति ॥११॥ अथो यः सहस्रं वा भूयो वा दद्यात् । तस्य हाप्युदवसानीया स्याद्रिरिचानऽइव वाऽएष भवति यः सहस्रं वा भूयो वा ददात्येतद्धै सहस्रं वाचः प्रजातं यदेष त्रयो वेदस्तत्सहस्रेण रिरिचानं पुनराप्याययति तस्मादु ह तस्याप्युदवसानीया स्यात् ॥१२॥ अथो ये दीर्घसत्रमासीरन् । संवत्सरं वा भूयो वा तेषाꣳ हाप्युदवसा-

१. योनिराशय इति च, ङ. २. संलुप्याच्छिनदिति. ख, च. ३. त्रिधातु इति. ग, घ.
४. नाम इति. ग. ५. अन्वतिष्ठत् इति. ग. ६. स्तस्माद्द्वादश इति. ग.
७. स्तस्मै इति च, ङ ८. त्रयेणेति. घ. ९. भवति इति. ग, घ.
१०. सूया इति. च. ११. भवति इति. च. १२. वाच इति. ग, घ.

नीया स्यात्सर्व्वं वै तेषामाप्तं भवति सर्व्वं जितं ये दीर्घसत्त्रमासते संवत्सरं वा भूयो वा सर्व्वमेषा तस्मादु ह तेषामप्युदवसानीया स्यात् ॥१३॥ अथो हैनयाप्यभिचरेत् । एतया वै भद्रसेनमाजातशत्रवमारुणिरभि चचार क्षिप्रं किलास्तृणुतेति ह स्माह याज्ञवल्क्योऽपि ह वाऽएनयेन्द्रो वृत्रस्यास्थानमच्छिनदपि ह वाऽएनयास्थानं छिनत्ति यऽएनयाभिचरति तस्मादु हैनयाप्यभिचरेत् ॥१४॥ अथो हैनयापि भिषज्येत् । यं न्वेवैकयर्चा भिषज्येदेकेन यजुषैकेन साम्ना तं न्वेवागदं कुर्यात्किमु यं त्रयेण वेदेन तस्मादु हैनयापि भिषजेत्[1] ॥१५॥ तस्यै त्रीणि शतमानानि हिरण्यानि दक्षिणा । तानि ब्रह्मणे ददाति न वै ब्रह्मा प्रचरति न स्तुतेन शᳪसत्यथ स यशो न वै हिरण्येन किं चन कुर्व्वन्त्यथ तद्यशस्तस्मात्त्रीणि शतमानानि ब्रह्मणे[2] ददाति ॥१६॥ तिस्रो धेनूर्होत्रे । भूमा वै तिस्रो धेनवो भूमा होता तस्मात्तिस्रो धेनूर्होत्रे ॥१७॥ त्रीणि वासाᳪस्यध्वर्य्यवे । तनुते वाऽअध्वर्य्युर्यज्ञं[3] तन्वते वासाᳪसि तस्मात्त्रीणि वासाᳪस्यध्वर्य्यवे गामग्नीधे ॥१८॥ ता वाऽएताः । द्वादश वा त्रयोदश वा दक्षिणा भवन्ति द्वादश वा वै त्रयोदश वा संवत्सरस्य मासाः संवत्सरसंमितैषेष्टिस्तस्माद्द्वादश[4] वा त्रयोदश वा दक्षिणा भवन्ति ॥१९॥ Cf. का. शं. ७. ५. ३.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे पञ्चमकाण्डे
चतुर्थप्रपाठके सप्तमं ब्राह्मणम् ॥ ( अ. ५. ५. )

चतुर्थः प्रपाठकस्समाप्तः ॥

( कण्डिकासंख्या १३१ )

( इति पञ्चमोऽध्यायः )

( अस्मिन् काण्डे कण्डिकासंख्या ४७१ )

---

१. भिषज्येदिति ख, ग, घ. २. ब्रह्मणे इति. ग, घ.
३. यज्ञमिति ग, घ. ४. संवत्सरसम्मितेति. ग.

॥ श्रीः ॥

## अथ माध्यन्दिनीये शतपथब्राह्मणे

# उखासम्भरणं नाम षष्ठं काण्डम् ॥

( चयनमन्त्र प्रतिपद्यते )

### प्रथमप्रपाठके प्रथमं ब्राह्मणम् ॥

६. १. १.

( सृष्टिनिरूपणम् )

हरिः ॐ ३॥ असद्वाऽइदमग्रऽआसीत् । तदाहुः किन्तदसदासीदित्यृषयो वाव तेऽग्रे सदासीत्तदाहुः के तऽऋषयऽइति प्राणा वाऽऋषयस्ते यत्पुरास्मात्सर्व्वस्मादिदमिच्छन्तः श्रमेण तपसारिषंस्तस्मादृषयः ॥१॥ स योऽयं मध्ये प्राणः। एषऽएवेन्द्रस्तानेष प्राणान्मध्यतऽइन्द्रियेणैन्द्ध यदैन्द्ध तस्मादिन्धऽइन्धो ह वै तमिन्द्र ऽइत्याचक्षते परोक्षं परोक्षकामा हि देवास्तऽइद्धाः सप्त नाना पुरुषानसृजन्त[1] ॥२॥ तेऽब्रुवन् । न वाऽइत्थꣳ सन्तः शक्ष्यामः प्रजनयितुमिमांत्सप्त पुरुषानेकं पुरुषङ्करवामेति तऽएतांत्सप्त पुरुषानेकं पुरुषमकुर्व्वन्यदूर्द्ध्वं नाभेस्तौ द्वौ समौब्जन्यदवाङ्नाभेस्तौ द्वौ पक्षः पुरुषः पक्षः पुरुषः प्रतिष्ठैकऽआसीत् ॥३॥ अथ यैतेषाꣳ सप्तानां पुरुषाणाꣳ श्रीः। यो रसऽआसीत्तमूर्द्ध्वꣳ समुदौहँ[2]स्तदस्य शिरोऽभवद्यच्छ्रियꣳ समुदौहँस्तस्माच्छिरस्तस्मिन्नेतस्मिन् प्राणा ऽअश्रयन्त तस्माद्वेवैतच्छिरोऽथ यत्प्राणाऽअश्रयन्त तस्मादु प्राणाः श्रियोऽथ यत्सर्व्व[3]स्मिन्नात्मन्नश्रयन्त तस्मादु शरीर[4]ꣳ ॥४॥ सऽएव पुरुषः प्रजापतिरभवत् । स यः

---

१. असृजन्त इति. च.

२. समुदौहन् इति. ग.

३. सर्वस्मिन्नश्रयन्त इति ग. घ.

४. शरीरम् इति. ग, घ.

स पुरुषः प्रजापतिरभवद्यमेव स योऽयमग्निश्चीयते ॥५॥ स वै
सप्तपुरुषो भवति । सप्त पुरुषो ह्ययं पुरुषो यच्चत्वारऽआत्मा
त्रयः पक्षपुच्छानि चत्वारो हि तस्य पुरुषस्यात्मा त्रयः पक्ष-
पुच्छान्यथ यदेकेन पुरुषेणात्मानं वर्द्धयति[1] तेन वीर्य्येणाय-
मात्मा पक्षपुच्छान्युद्यच्छति[2] ॥६॥ अथ याश्रितेऽग्निर्निधीयते । यैवै-
तेषाᳬं सप्तानां पुरुषाणाᳬं श्रीर्यो रसस्तमेतदूर्ध्वᳬं समुदूहन्ति
तदस्यैतच्छिरस्तस्मिन्नेतस्मिंत्सर्व्वे देवाः श्रिताऽअत्र हि सर्व्वेभ्यो
देवेभ्यो जुह्वति तस्माद्वेवैतच्छिरः ॥७॥ सोऽयं पुरुषः प्रजापतिर-
कामयत । भूयान्त्स्यां प्रजायेयेति सोऽश्राम्यत्स तपोऽतप्यत स श्रा-
न्तस्तेपानो ब्रह्मैव प्रथममसृजत त्रयीमेव विद्याᳬं सैवास्मै प्रतिष्ठा-
भवत्तस्मादाहुर्ब्रह्मास्य सर्व्वस्य प्रतिष्ठेति तस्मादनूच्य प्रतितिष्ठति
प्रतिष्ठा ह्येषा यद्ब्रह्म तस्यां प्रतिष्ठायां प्रतिष्ठितो[3]ऽतप्यत ॥८॥ सो-
ऽपोऽसृजत । वाचऽएव लोकाद्वागेवास्य सासृज्यत सेदᳬं सर्व्व-
माप्नोद्यदिदं किञ्च यदाप्नोत्तस्मादापो यदवृणोत्तस्माद्वाः ॥९॥
सोऽकामयत[4] । आभ्योऽद्भ्योऽधि प्रजायेयेति सोऽनया त्रय्या विद-
यया सहापः प्राविशत्तत[5]ऽआण्डᳬं समवर्त्तत तदभ्यमृशदस्त्वित्य-
स्तु भूयोऽस्त्वित्येव तदब्रवीत्ततो ब्रह्मैव प्रथममसृज्यत त्रय्येव विद्या
तस्मादाहुर्ब्रह्मास्य सर्व्वस्य प्रथमजमित्यपि हि तस्मात्पुरुषाद्ब्रह्मैव
पूर्व्वमसृज्यत तदस्य तन्मुखमेवासृज्यत तस्मादनूचानमाहुरग्निकल्प-
इति मुखᳬं ह्येतदग्नेर्यद्ब्रह्म[6] ॥१०॥ अथ यो गर्भोऽन्तरासीत् ।
सोऽग्निरसृज्यत[7] स यदस्य सर्व्वस्याग्रमसृज्यत तस्मादग्रिरग्रिर्ह[8] वै
तमग्निरित्याचक्षते[9] परोक्षं परोक्षकामा हि देवाऽअथ यदश्रु संक्ष-

---

१. वर्द्धयति इति. ग, घ. २. न्युद्यच्छति इति. च ३. प्रतिष्ठितो इति. घ.
४. अकामयत । आभ्यो इति. ख, ग, घ. ५. प्राविशत्त आण्डᳬं इति घ.
६. ब्रह्म ॥ १० ॥ अथ इति. ख, घ. ७. अग्निरसृज्यत इति च.
८. दग्निरग्निर्ह इति. च. ९. रित्याचक्षत इति. च.

रितमासीत्सोऽश्रुरभवदश्रुह वै तमश्वऽइत्याचक्षते परोक्षं परोक्षकामा हि देवाऽअथ यदरसदिव स रासभोऽभवदथ यः कपाले रसो लिप्तऽआसीत्सोऽजोऽभवदथ यत्कपालमासीत्सा पृथिव्यभवत् ॥११॥ सोऽकामयत । आभ्योऽद्भ्योऽधीमां प्रजनयेयमिति ताᳪंसंक्लिश्याप्सु प्राविध्यत्तस्यै यः पराङ्रसोऽत्यक्षरत्स कूर्मोऽभवदथ यदूर्ध्वमुदौक्ष्यतेदं तद्यदिदमूर्ध्वमद्भ्योऽधिजायते सेयᳫं सर्वापऽएवानुव्यैत्तादिदमेकमेव रूपᳫंसमदृश्यतापऽएव ॥१२॥ सोऽकामयत । भूयऽएव स्यात्प्रजायेतेति सोऽश्राम्यत्स तपोऽतप्यत श्रान्तस्तेपानः फेनमसृजत सोऽवेदन्यद्वाऽएतद्रूपं भूयो वै भवति श्राम्याण्येवेति स श्रान्तस्तेपानो मृदᳫं शुष्कापमूषसिकतᳪं शर्करामश्मानमयो हिरण्यमोषधिवनस्पत्यसृजत तेनेमां पृथिवीं प्राच्छादयत् ॥१३॥ ता वा ऽएता नव सृष्टयः । इयमसृज्यत तस्मादाहुस्त्रिवृदग्निरितीयᳪं ह्यग्निरस्यै हि सर्वोऽग्निश्चीयते ॥१४॥ अभूद्वाऽइयं प्रतिष्ठेति । तद्भूमिरभवत्तामप्रथयत्सा पृथिव्यभवत्सेयᳫं सर्वा कृत्स्ना मन्यमानाऽगायद्यदगायत्तस्मादियङ्गायत्र्यथोऽआहुरग्निरेवास्यै पृष्ठे सर्वः कृत्स्नो मन्यमानोऽगायद्यदगायत्तस्मादग्निर्गायत्रऽइति तस्मादु हैतद्यः सर्वः कृत्स्नो मन्यते गायति वैव गीते वा रमते ॥१५॥ Cf. का. श. ८. १. १.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे उखासम्भरणाख्ये षष्ठकाण्डे प्रथमप्रपाठके प्रथमं ब्राह्मणम् ॥ (अ.१.१.)

---

१. अकामयत । आभ्यो इति. घ.
२. दथ यदूर्ध्वमिति. घ.
३. सर्वाप इति. घ.
४. अकामयत इति. घ.
५. चीयते इति घ, चीयत इति च.
६. अप्रथयत्सा इति घ.
७. तस्मादिति घ.
८. अस्यै. इति ग, घ.
९. रमते. इति. घ.

## ६. १. २.

### ( सृष्टिनिरूपणम् )

सोऽकामयत प्रजापतिः । भूयऽएव स्यात्प्रजायेतेति सोऽग्निना
थिवीं मिथुनꣳ समभवत्ततऽआण्डꣳ समवर्त्तत तदभ्यमृशत्पुष्य-
त्विति पुष्यतु भूयोऽस्त्वित्येव तदब्रवीत् ॥१॥ स यो गर्भोऽन्त-
रासीत् । स वायुरसृज्यताथ यदश्रु संक्षरितमासीत्तानि वयाꣳसि
यभवन्नथ यः कपाले रसो लिप्तऽआसीत्ता मरीचयोऽभवन्नथ
यत्कपालमासीत्तदन्तरिक्षमभ[1]वत् ॥२॥ सोऽकामयत । भूयऽएव
यात्प्रजायेतेति स वायुनान्तरिक्षं मिथुनꣳ समभवत्ततऽआण्डꣳ
मवर्त्तत तदभ्यमृशद्यशो बिभृहीति ततोऽसावादित्योऽसृज्यतैष
यशोऽथ यदश्रु संक्षरितमासीत्सोऽश्मा पृश्निरभवदश्रुर्ह वै तम-
मेत्याचक्षते परोक्षं परोक्षकामा हि देवाऽअथ यः कपाले रसो
लप्तऽआसीत्ते रश्मयोऽभवन्नथ यत्कपालमासीत्सा द्यौरभवत् ॥३॥
सोऽकामयत । भूयऽएव स्यात्प्रजायेतेति सऽआदित्येन दिवं
मिथुनꣳ समभव[2]त्ततऽआण्डꣳ समवर्त्तत तदभ्यमृशद्रेतो बिभृहीति
ततश्चन्द्रमाऽअसृज्यतैष वै रेतोऽथ यदश्रु संक्षरितमासीत्तानि नक्ष-
त्राण्यभवन्नथ यः कपाले रसो लिप्तऽआसीत्ताऽअवान्तरदिशो-
ऽभवन्नथ यत्कपालमासीत्ता दिशोऽभवन् ॥४॥ सऽइमांल्लोकान्त्सृ-
ष्ट्वाकामयत । ताः प्रजाः सृजेय या मऽएषु लोकेषु स्युरिति ॥५॥
स मनसा वाचं मिथुनꣳ समभवत् । सोऽष्टौ द्रप्सान् गर्भ्य[4]भव-
त्तेऽष्टौ वसवोऽसृज्यन्त तानस्यामुपादधात् ॥६॥ स मनसैव ।
वाचं मिथुनꣳ समभवत्सऽएकादश द्रप्सान् गर्भ्यभवत्तऽ-
एकादश रुद्राऽअसृज्यन्त तानन्तरिक्षऽउपादधात् ॥७॥ स मन[5]-

---

१. अभवत् इति ग, घ.　　२. आण्डꣳ इति ग, घ.　　३. तत इति. घ.
४. गर्भ्यं इति. ग, घ.　　५. मनसैव इति. घ.

सैव । व्वाचं मिथुनꣳ समभवत्स द्वादश द्रप्सान् गर्भ्यभ
द्वादशादित्या ऽअसृज्यन्त तान्दिव्युपादधात् ॥८॥ स मनसै
व्वाचं मिथुनꣳ समभवत्स गर्भ्यभवत्स व्विश्वान्देवानसृजत ता
क्षूपादधात् ॥९॥ अथोऽआहुः । अग्निमेव सृष्टं व्वसवो ऽन्वसृज
तानस्यामुपादधाद्वायुꣳ रुद्रास्तानन्तरिक्षऽआदित्यमादित्यास्तान्
व्विश्वे देवाश्चन्द्रमसं तान्दिक्षूपादधादिति ॥१०॥ अथोऽआहु
प्रजापतिरेवेमाँल्लोकान्त्सृष्ट्वा पृथिव्यां प्रत्यतिष्ठत्तस्माऽइमाऽओ
षधयोऽन्नमपच्यन्त तदाश्नात्स गर्भ्यभवत्सऽऊर्ध्वेभ्य ऽएव प्राणे
देवानसृजत य्येऽवाञ्चः प्राणास्तेभ्यो मर्त्याः प्रजा ऽइत्यतो यत्तम
सृजत तथासृजत प्रजापतिस्त्वेवेदꣳ सर्व्वमसृजत य्यदिदं कि
॥११॥ स प्रजाः सृष्ट्वा । सर्व्वमाजिमित्वा व्यस्रꣳसत तस्मादु हैत
सर्व्वमाजिमेति व्येव स्रꣳसते तस्माद्विस्रस्तात्प्राणो मध्यत ऽउदक्र
मत्तस्मिन्नेनमुत्क्रान्ते देवा ऽअजहुः ॥१२॥ सोऽग्निमब्रवीत् । त्वं
सन्धेहीति किं मे ततो भविष्यतीति त्वया माचक्षान्तै यो वै पुत्राणा
राध्यते तेन पितरं पितामहं पुत्रं पौत्रमाचक्षते त्वया माचक्षान्त
ऽअथ मा सन्धेहीति तथेति तमग्निः समदधात्तस्मादेतं प्रजापति
सन्तमग्निरित्याचक्षतऽआ ह वाऽएनेन पितरं पितामहं पुत्रं पौ
चक्षते यऽएवं व्वेद ॥१३॥ तमब्रवीत् । कस्मिंस्त्वोपधास्यामी
हितऽएवेत्यब्रवीत्प्राणो वै हितं प्राणो हि सर्व्वेभ्यो भूतेभ्यो हित
स्तद्यदेनꣳ हितऽउपादधात्तस्मादाहोपधास्याम्युपदधाम्युपाधामिति
॥१४॥ तदाहुः । किꣳ हितं किमुपहितमिति प्राण ऽएव हितं व्वा
गुपहितं प्राणे हीयं व्वागुपेव हिता प्राणस्त्वेव हितमङ्गान्युपाहित
प्राणे हीमान्यङ्गान्युपेव हितानि ॥१५॥ सोऽस्यैष चित्यऽआसीत्
चेतव्यो ह्यस्यासीत्तस्माच्चित्यश्चित्य ऽउ ऽएवायं य्यजमानस्य भवति

१. मनसैव इति. घ. २. दिति इति च. ३. प्रजापतिरेवेति ग, घ.
४. सृष्ट्वा इति. ग, घ. ५. हिता. इति. ग. ६. ह्यस्य इति घ.

यो ह्यस्य भवति तस्माद्वेव चित्यः ॥१६॥ तदेता वाऽअस्यताः ।
तन्वो व्यस्रᳫंसन्त लोम त्वङ्माᳫंसमस्थिमज्जा ताऽएवैताः
चितयस्तद्यत्पञ्च चितीश्चिनोत्येताभिरेवैनं तत्तनूभिश्चिनोति
चिनोति तस्माच्चितयः ॥१७॥ स यः स प्रजापतिर्व्यस्रᳫंसत ।
सरः सोऽथ याऽअस्यताः पञ्च तन्वो व्यस्रᳫंसन्तर्त्तवस्ते पञ्च
ऋतवः पञ्चैताश्चितयस्तद्यत्पञ्च चितीश्चिनोत्यृतुभिरेवैनं तच्चिनो-
त्यच्चिनोति तस्माच्चितयः ॥१८॥ स यः स संवत्सरः प्रजापति-
ᳫंसत । अयमेव स वायुर्योऽयं पवतेऽथ याऽअस्यताऽऋतवः
तन्वो व्यस्रᳫंसन्त दिशस्ताः पञ्च वै दिशः पञ्चैताश्चितयस्तद्य-
चितीश्चिनोति दिग्भिरेवैनं तच्चिनोति यच्चिनोति तस्माच्चितयः
॥ अथ यश्चितेऽग्निर्निधीयते । असौ सऽआदित्यः स ऽएष
षो ऽग्निश्चितऽएतावन्तु तद्यदेनमग्निः समदधात् ॥२०॥ अथोऽ-
: प्रजापतिरेव विस्रस्तो देवानब्रवीत्सम्मा धत्तेति ते देवा अग्नि-
त्स्त्वयीमं पितरं प्रजापतिं भिषज्यामेति स वाऽअहमेतस्मिंत्सर्व्वे-
व विशानीति तथेति तस्मादेतं प्रजापतिᳫं सन्तमग्निरित्याचक्षते
॥ ( शतम् ३४०० ) तं देवाऽअग्नावाहुतिभिरभिषज्यन् । ते
यामाहुतिमजुहवुः सा सैनं पक्वेष्टका भूत्वाप्यपद्यत तद्यदिष्टा-
भवंस्तस्मादिष्टकास्तस्मादग्निनेष्टकाः पचन्त्याहुतीरेवैनास्तत्कुर्व्वन्ति
॥ सोऽब्रवीत् । यावद्यावद्वै जुहुथ तावत्तावन्मे कं भवतीति
स्माऽइष्टे कमभवत्तस्माद्वेवेष्टकाः ॥२३॥ तद्ध स्माहाक्काक्ष्यः ।
ऽएव यजुष्मतीर्भूयसीरिष्टका विद्यात्सो ऽग्निश्चिनुयाद्भूय
तत्पितरं प्रजापतिं भिषज्यंतीति ॥२४॥ अथ ह स्माह
यः । क्षत्रं वै यजुष्मत्यऽइष्टका विशो लोकंपृणाऽअत्ता वै
यो ऽन्नं विड्यत्र वाऽअत्तुरन्नं भूयो भवति तद्राष्ट्रᳫं समृद्धं भवति

१. ताः इति ग.   २. चितय इति. ग,   ३. अस्यैताः इति ग, घ.
४. चितयः ॥१९॥ अथ इति. ग, घ.   ५. अग्निश्चित इति ग, घ.
६. तं देवा इति ग, घ.   ७. भिषज्यतीति घ, तीति इति च.

तद्धते तस्माल्लोकंपृणाऽएव भूयसीरुपदध्यादित्येतदह तयोर्व्वेवो- ऽन्या त्वेवात स्थितिः ॥२५॥ सऽएष पिता पुत्रः । यद्देषोऽग्नि- मसृजत तेनैषोऽग्नेः पिता यदेतमग्निः समदधात्तेनैतस्याग्निः पिता यदेष देवानसृजत तेनैष देवानां पिता यदेतन्देवाः समदधुस्तेनैत- स्य देवाः पितरः ॥२६॥ उभयᳬ हैतद्भवति । पिता च पुत्रश्च प्रजा- पतिश्चाग्निश्चाग्निश्च प्रजापतिश्च प्रजापतिश्च देवाश्च देवाश्च प्रजापति- श्च यऽएवं व्वेद ॥२७॥ सऽउपदधाति । "तया देवतये"ति व्वाग्वै सा देवताङ्गिरस्वदिति प्राणो वाऽअङ्गिरा "ध्रुवा सीदे"ति स्थिरा सी- देत्येतदथो प्रतिष्ठिता सीदेति व्वाचा चैवैनमेतत्प्राणेन च चिनोति व्वाग्वाऽअग्निः प्राणऽइन्द्रऽऐन्द्राग्नोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतच्चिनोतीन्द्राग्नी वै सर्व्वे देवाः सर्व्वदेवत्योऽग्निर्य्यावान- ग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतच्चिनोति ॥२८॥ तदाहुः । कस्मा- दस्याऽअग्निश्चीयतऽइति यत्र वै सा देवता व्यस्रᳬसत तदिमामेव रसेनानु व्यक्षरत्तं यत्र देवाः समस्कुर्व्वंस्तदेनमस्याऽएवाधि सम- भरन्त्सैषैकैवेष्टकेयमेवेयᳬ ह्यग्निरस्यै हि सर्व्वोऽग्निश्चीयते सेयं चतुः- स्रक्तिर्हि दिशो ह्यस्यै स्रक्तयस्तस्माच्चतुःस्रक्तयऽइष्टका भवन्तीमाᳬ ह्यनु सर्व्वाऽइष्टकाः ॥२९॥ तदाहुः । यदेवमेकेष्टकोऽथ कथं पञ्चे- ष्टकऽइतीयं त्वेव प्रथमा मृन्मयीष्टका तद्यत्किञ्चात्र मृन्मयमुपदधा- त्येकैव सेष्टकाथ यत्पशुशीर्षाण्युपदधाति सा पश्विष्टकाथ यद्रुक्म- पुरुषाऽउपदधाति यद्धिरण्यशकलैः प्रोक्षति सा हिरण्येष्टकाथ यत्स्रुचाऽउपदधाति यदुलूखलमुसले याः समिधऽआदधाति सा व्वानस्पत्येष्टकाथ यत्पुष्करपर्णमुपदधाति यत्कूर्म्मं यद्दधि मधु घृतं यत्किञ्चात्रान्नमुपदधाति सैवान्नं पञ्चमीष्टकैवमु पञ्चेष्टकः ॥३०॥ तदाहुः । कतरत्तऽइष्टकायाः शिरऽइति यतऽउपस्पृश्य यजुर्व्वेद-

१. हैतदिति घ.
२. देवाश्चेति नास्ति घ.
३. चिनोति इति. च
४. वेयᳬ इति घ.
५. इष्टका इति. ग, घ.
६. उपदधाति इति. ग, घ.

तीत्यु हैकऽआहुः स स्वयमातृण्णाया ऽएवार्द्धादुपस्पृश्य य्यजुर्व्वदेत्तथो हास्यैताः सर्व्वाः स्वयमातृण्णामभ्यावृत्ता भवन्तीति न तथा कुर्यादङ्गानि वाऽअस्यैतानि परूꣳषि यदिष्टका य्यथा वाऽअङ्गेऽङ्गे पूर्व्वन्पर्व्वञ्छिरः कुर्य्यात्तादृक्तद्यो वाव चितेऽग्निर्न्निधीयते तदेवैतासाꣳ सर्व्वासाꣳ शिरः ॥३१॥ तदाहुः । कति पशवोऽग्नाऽउपधीयन्तऽइति पञ्चेति न्वेव ब्रूयात्पञ्च ह्येतान् पशूनुपदधाति ॥३२॥ अथोऽएकऽइति ब्रूयात् । अविरितीयं वाऽअविरियꣳ हीमाः सर्व्वाः प्रजाऽअवतीयमु वाऽअग्निरस्यै हि सर्व्वोऽग्निश्चीयते तस्मादेकऽइति ब्रूयात् ॥३३॥ अथो द्वाविति ब्रूयात् । अवीऽइतीयं चासौ चेमे हीमाः सर्व्वाः प्रजा ऽअवतो यन्मृदि यन्तद्यदापोऽसौ तन्मृच्चापश्चेष्टका भवन्ति तस्माद्द्वाविति ब्रूयात् ॥३४॥ अथो गौरिति ब्रूयात् । इमे वै लोका गौर्यद्धि किं च गच्छतीमांस्तल्लोकान्गच्छतीमऽउ लोका ऽएषोऽग्निश्चितस्तस्माद्गौरिति ब्रूयात् ॥३५॥ तदाहुः । कस्मै कामायाग्निश्चीयतऽइति सुपर्णो मा भूत्वा दिवं वहादित्यु हैकऽआहुर्न्न तथा विद्यादेतद्वै रूपं कृत्वा प्राणाः प्रजापतेरभवन्नेतद्रूपं कृत्वा प्रजापतिर्द्देवानसृजतैतद्रूपं कृत्वा देवा ऽअमृताऽअभवंस्तद्यदेवैतेन प्राणा ऽअभवन्यत्प्रजापतिर्य्यद्देवास्तदेवैतेन भवति ॥३६॥ *Cf.* का. श. ८. १. २.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे षष्ठकाण्डे
प्रथमप्रपाठके द्वितीयं ब्राह्मणम् ॥ ( अ. १. २. )

## ६. १. ३.

### ( अबादिसृष्टिः कुमारोत्पत्तिश्च )

प्रजापतिर्व्वाऽइदमग्रऽआसीत् । एक ऽएव सोऽकामयत स्यां प्रजायेयेति सोऽश्राम्यत्स तपोऽतप्यत तस्माच्छ्रान्तात्तेपानादापोऽसृज्यन्त तस्मात्पुरुषात्तप्तादापो जायन्ते ॥१॥ आपोऽब्रुवन् । क वयं भवामेति तप्यध्वमित्यब्रवीत्ताऽअतप्यन्त ताः फेनमसृजन्त

तस्मादपां तप्तानां फेनो जायते ॥२॥ फेनोऽब्रवीत् । काहं भवानीति तप्यस्वेत्यब्रवीत्सोऽतप्यत स मृदमसृजतैतद्वै फेनस्तप्यते यदप्स्वावेष्टमानः प्लवते स यदोपहन्यते मृदेव भवति ॥३॥ मृदब्रवीत्। काहं भवानीति तप्यस्वेत्यब्रवीत्साऽतप्यत सा सिकता ऽअसृजतैतद्वै मृत्तप्यते यदेनां विकृषन्ति तस्माद्यद्यपि सुमार्त्स्नं विकृषन्ति सैकतमिवैव भवत्येतावन्नु तद्यत्काहं भवानि काहं भवानीति ॥४॥

( अर्द्धप्रपाठकः )

सिकताभ्यः शर्क्करामसृजत । तस्मात्सिकताः शर्क्करैवान्ततो भवति शर्क्कराया ऽअश्मानं तस्माच्छर्क्कराश्मैवान्ततो भवत्यश्मनोऽयस्तस्मादश्मनोऽयो धमन्त्ययसो हिरण्यं तस्मादयो बहुध्मातꣳ हिरण्यसङ्काशमिवैव भवति ॥५॥ तद्यदसृज्यताक्षरत् । तद्यदक्षरत्तस्मादक्षरं यदष्टौ कृत्वोऽक्षरत्सैवाष्टाक्षरा गायत्र्यभवत् ॥६॥ अभूद्वाऽइयं प्रतिष्ठेति । तद्भूमिरभवत्तामप्रथयत्सा पृथिव्यभवत्तस्यामस्यां प्रतिष्ठायां भूतानि च भूतानां च पतिः संवत्सरायादीक्षन्त भूतानां पतिर्गृहपतिरासीदुषाः पत्नी ॥७॥ तद्यानि तानि भूतानि । ऋतवस्तेऽथ यः स भूतानां पतिः संवत्सरः सोऽथ या सोषाः पत्न्यौपसी सा तानीमानि भूतानि च भूतानां च पतिः संवत्सरऽउषसि रेतोऽसिञ्चन्त्स संवत्सरे कुमारोऽजायत सोऽरोदीत् ॥८॥ तं प्रजापतिरब्रवीत् । कुमार किꣳ रोदिषि यच्छ्रमात्तपसोऽधिजातोऽसीति सोऽब्रवीदनपहतपाप्मा वाऽअस्म्यहितनामा नाम मे धेहीति तस्मात्पुत्रस्य जातस्य नाम कुर्यात्पाप्मानमेवास्य तदपहन्त्यपि द्वितीयमपि तृतीयमभि पूर्व्वमेवास्य तत्पाप्मानमपहन्ति ॥९॥ तमब्रवीद्रुद्रोऽसीति । तद्यदस्य तन्नामाकरोदग्निस्तद्रूपमभवदग्निर्वै रुद्रो यदरोदीत्तस्माद्रुद्रः सोऽब्रवीज्ज्यायान्वाऽअतो-

१. शर्करास्मैवेति. ग, घ. २. मस्यामिति. घ. ३. अब्रवीत् इति. ग.
४. तृतीयमभि इति. ग. ५. रुद्रो इति ग.

ऽस्मि धेह्येव मे नामेति ॥१०॥ तमब्रवीत्सर्व्वो[1]ऽसीति । तद्य-
दस्य तन्नामाकरोदापस्तद्रूपमभवन्नापो वै सर्व्वोऽद्भ्यो हीदँ सर्व्वं
जायते सोऽब्रवीज्ज्यायान्वा ऽअतोऽस्मि धेह्येव मे नामेति ॥११॥
तमब्रवीत्पशुपतिरसीति । तद्यदस्य तन्नामाकरोदोषधयस्तद्रूपमभव-
न्नोषधयो वै पशुपतिस्तस्माद्यदा पशवऽओषधीर्लभन्तेऽथ पतीयन्ति
सोऽब्रवीज्ज्यायान्वा ऽअतोऽस्मि धेह्येव मे नामेति ॥१२॥ तमब्रवी-
दुग्रोऽसीति । तद्यदस्य तन्नामाकरोद्वायुस्तद्रूप[2]मभवद्वायुर्व्वाऽउग्रस्त-
स्माद्यदा बलवद्वात्युग्रो व्वातीत्याहुः सोऽब्रवीज्ज्यायान्वाऽअतोऽस्मि
धेह्येव[3] मे नामेति ॥१३॥ तमब्रवीदशनिर[4]सीति । तद्यदस्य तन्नामा-
करोद्विद्युत्तद्रूपमभवद्विद्युद्वा ऽअशनिस्तस्माद्यं विद्युद्धन्त्यशनिरव-
धीदित्याहुः सोऽब्रवीज्ज्यायान्वाऽअतोऽस्मि धेह्येव मे नामेति ॥१४॥
तमब्रवीद्भवोऽसीति । तद्यदस्य तन्नामाकरोत्पर्ज्जन्यस्तद्रूपमभवत्प-
र्ज्जन्यो वै भवः पर्ज्जन्याद्धीदँ सर्व्वं भवति सोऽब्रवीज्ज्यायान्वा-
ऽअतोऽस्मि धेह्येव मे नामेति ॥१५॥ तमब्रवीन्महान्देवोऽसीति ।
तद्यदस्य तन्नामाकरोच्चन्द्रमास्तद्रूपमभवत्प्रजापति[5]र्व्वै चन्द्रमाः प्रजा-
पतिर्व्वै महान्देवः सोऽब्रवीज्ज्यायान्वाऽअतोऽस्मि धेह्येव मे नामेति
॥१६॥ तमब्रवीदीशानो[6]ऽसीति । तद्यदस्य तन्नामाकरोदादित्यस्तद्रू-
पमभवदादित्यो वाऽईशान ऽआदित्यो ह्यस्य सर्व्वस्येष्टे सोऽब्रवी-
देतावान्वाऽअस्मि मामेतः परो नाम धाऽइति ॥१७॥ तान्येतान्यष्टा-
वग्निरूपाणि । कुमारो नवमः सैवाग्नेस्त्रिवृत्ता ॥१८॥ यद्वेवाष्टावग्नि-
रूपाणि । अष्टाक्षरा गायत्री तस्मादाहुर्गायत्रोऽग्निरिति सोऽयं कुमारो

१. शर्वे इति च. २. तद्रूपमिति. ग, घ. ३. धेह्येव इति. ग.
४. रसीति इति. घ. ५. प्रजापतिरिति. घ.

६. इमानि रुद्रादीनीशानान्तानि अष्टौ नामानि शिवनामतया परिगृह्य शूलगवाख्ये कर्मणि बौधायनापस्तम्बादिभिस्तदीयदेवतानामत्वेनोक्तानि. See बौ. गृ. २. १२. १; आप. मन्त्रसं. २. १८. १४; also आश्व. गृ. ४. १०. १४. अत्र तु द्वादश नामानि उच्यन्ते ।

'अपां पृष्ठमसि य्योनिरग्ने''रिति । अपाᳬं ह्येतत्पृष्ठं य्योनिर्ह्येत-ग्नेः ''समुद्रमभितः पिन्वमान''मिति समुद्रो ह्येतदभितः पिन्वते ''व्वर्द्धमानो महाँ२॥ऽआ च पुष्कर''ऽइति व्वर्द्धमानो महीयस्व पुष्करऽइ-येत''द्दिवो मात्रया व्वरिम्णा प्रथस्वे''त्यनुविमाष्र्ष्यसौ वाऽआदित्यऽ-षोऽग्निर्नो हैतमन्यो दिवो व्वरिमा य्यन्तुमर्हति द्यौर्भूत्वैनं यच्छेत्ये-तदाह ॥८॥ तदुत्तरं कृष्णाजिनादुपस्तृणाति । यज्ञो वै कृष्णाजि-मियं वै कृष्णाजिनमियमु वै य्यज्ञोऽस्याᳬं हि यज्ञस्तायते द्यौष्पु-ष्करपर्णमापो वै द्यौरापः पुष्करपर्णमुत्तरो वाऽअसावस्यै ॥९॥ अथैनेऽ-भिमृशति । संज्ञामेवाभ्यामेतत्करोति ''शर्म्म च स्थो व्वर्म्म च स्थ''-इति शर्म्म च ह्यस्यैते व्वर्म च्चा''च्छिद्रे बहुलेऽउभे''ऽइत्यच्छिद्रे ह्येते हुलेऽउभे ''व्यचस्वती संव्वसाथा''मित्यवकाशवती संव्वसाथामित्ये-''द्भृतमग्निं पुरीष्य''मिति बिभृतमग्निं पशव्यमित्येतत् ॥१०॥ ''संव्वसा-थाᳬं स्वर्व्विदा । समीचीऽउरसात्मने''ति संव्वसाथामेनᳬं स्वर्व्विदा मीचीऽउरसा चात्मना चेत्येतद''ग्निमन्तर्भरिष्यन्ती ज्योतिष्मन्तमज-मि''दित्यसौ वाऽआदित्यऽएषोऽग्निः सऽएष ज्योतिष्मानजस्रस्तमेते-अन्तरा बिभृतस्तस्मादाह ज्योतिष्मन्तमजस्रमिदिति ॥११॥ द्वाभ्या-भिमृशति । द्विपाद्यजमानो य्यजमानोऽग्निर्य्यावानग्निर्य्यावत्यस्य त्रा तावतैवाभ्यामेतत्संज्ञाङ्करोत्यथो द्वयᳬं ह्येवैतद्रूपं कृष्णाजिनञ्च ष्करपर्णञ्च ॥१२॥ Cf. का. श. ८. ४. १; तै. सं. ५. १. २, ३; . सं. ३. १. ४; कठ. सं. १९. ३, ४; कपि. ३. १.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे षष्ठकाण्डे
तृतीयप्रपाठके द्वितीयं ब्राह्मणम् ॥ (अ.४.१.)

---

-३. मा.सं. ११.२९.  ४. महाँ ३॥ऽआ च इति.ख.  ५. मा सं. ११.२९.
द्यौः पुष्कर इति.ग,घ.  ७-१०. मा. सं. ११.३०.  ११. एतत् इति. ग, च
,१३. मा.सं. ११.३१.  १४. तमेते इति. घ.  १५. कृष्णाजिनं इति.ग.

## ६. ३. ३.

## ( उखानिर्माणम् )

अथ मृत्पिण्डमभिमृशति । "[1]पुरीष्योऽसी"ति पशव्योऽसीत्येत"[2]द्विश्वभरा"ऽइत्येष हीदꣳ सर्व्वं बिभर्त्य"[3]थर्वा त्वा प्रथमो निरमन्थदग्न"ऽइति प्राणो वाऽअथर्व्वा प्राणो वाऽएतमग्रे निरमन्थत्सद्योऽसावग्नेऽग्निरसृज्यत सोऽसीति तदाह तमेवैनमेतत्करोति ॥१॥ अथैनं परिगृह्णाति । अभ्र्या च दक्षिणतो हस्तेन च हस्तेनैवोत्तरत"[4]स्त्वामग्ने पुष्करादध्यथर्व्वा निरमन्थते"त्यापो वै पुष्करं प्राणोऽथर्व्वा प्राणो वाऽएतमग्रेऽद्भ्यो निरमन्थ"[5]न्मूर्ध्नो विश्वस्य व्वाघत"ऽइत्यस्य सर्व्वस्य मूर्ध्नऽइत्येतत् ॥२॥ "[6]तमु त्वा दध्यङ्ङृषिः । पुत्रऽईधेऽअथर्व्वण"ऽइति व्वाग्वै दध्यङ्ङाथर्व्वणः सऽएनं ततऽऐन्ध "व्वृत्रहणं पुरन्दर"मिति पाप्मा वै व्वृत्रः पाप्महनं पुरन्दरमित्येतत् ॥३॥ "[7]तमु त्वा पाथ्यो व्वृषा । समीधे दस्युहन्तम"मिति मनो वै पाथ्यो व्वृषा सऽएनन्ततऽऐन्ध "धनञ्जयꣳ रणे रण"ऽइति यथैव यजुस्तथा बन्धुः ॥४॥ गायत्रीभिः । प्राणो गायत्री प्राणमेवास्मिन्नेतद्दधाति तिसृभिस्त्रयो वै प्राणाः प्राणऽउदानो व्यानस्तानेवास्मिन्नेतद्दधाति तासान्नव पदानि नव वै प्राणाः सप्त शीर्षन्नवाञ्चौ द्वौ तानेवास्मिन्नेतद्दधाति ॥५॥ अथैते त्रिष्टुभाऽउत्तरे भवतः । आत्मा वै त्रिष्टु[10]बात्मानमेवास्यैताभ्याꣳ संस्करोति "[11]सीद होतः स्वऽउ लोके चिकित्वा"नित्यग्निर्व्वै होता तस्यैष स्वो लोको यत्कृष्णाजिनञ्चिकित्वानिति विद्वानित्येत"[12]त्सादया यज्ञꣳ सुकृतस्य योना"विति कृष्णाजिनं वै सुकृतस्य योनि"[13]र्देवावीर्देवान्हविषा यजासी"ति देवः सन्देवानवन्हविषा यजासीत्येत"[14]दग्ने बृहद्यजमाने व्वयोधा"ऽइति य[15]जमानायाशिषमाशास्ते ॥६॥ "नि [16]होता

---

१-५. मा. सं. ११. ३२. ६, ७. मा. सं. ११. ३३.
८, ९. मा. सं. ११. ३४. १०. त्रिष्टुबात्मानमेवेति ग, घ.
११-१४. मा. सं. ११ ३५. १५. यजमानायेति. घ. १६. मा.सं.११.३६.

ोतृषदने विद्वान''ऽइति । अग्निर्वै होता कृष्णाजिनꣳ होतृषदनं वि-
ान ऽइति विद्वानित्येत''त्वेषो दीदिवाँ २ ऽअसदत्सुदक्ष''ऽइति त्वेषो
ीप्यमानोऽसदत्सुदक्षऽइत्येत''ददब्ध[3]व्रतप्रमतिर्वसिष्ठ''ऽइत्यदब्धव्रत-
मतिर्ह्येष वसिष्ठः ''सहस्रंभरः शुचिजिह्वोऽअग्नि''रिति सर्वं वै सहस्रꣳ
ार्वंभरः शुचिजिह्वोऽग्निरित्येतद्द्वाभ्यामाग्नेयीभ्यां त्रिष्टुब्भ्यां तस्योक्तो
न्धुः ॥७॥ अथैषा बृहत्युत्तमा भवति । बृहती वाऽएष सञ्चितोऽभि-
म्पद्यते यादृग्वै योनौ रेतः सिच्यते तादृग्जायते तद्यदेतामत्र बृह-
ीं करोति तस्मादेष सञ्चितो बृहतीमभिसम्पद्यते ॥८॥ ''सꣳ सीदस्व
हाँ २ ऽअसी''ति । इदमेवैतद्रेतःसिक्तꣳसꣳसादयति तस्माद्योनौ
ेतः सिक्तꣳ सꣳसीदति ''शोचिस्व देववीतम''ऽ इति दीप्यस्व देव-
ीतमऽइत्येत''द्वि धूममग्नेऽअरुषं मियेध्य सृज प्रशस्त दर्शत''मिति यदा
ा वाऽएष समिध्यतेऽथैष धूममरुषं विसृजते दर्शतमिति दृशः ऽ-
व ह्येषः ॥९॥ ताः षट् सम्पद्यन्ते । षडृतवः संवत्सरः संवत्सरोऽ-
ग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद्भवति यद्वेव संवत्सरमभि-
म्पद्यते तद्बृहतीमभिसम्पद्यते बृहती हि संवत्सरो द्वादश पौर्ण-
ास्यो द्वादशाष्टका द्वादशामावास्यास्तत्षट्त्रिꣳशत्षट्त्रिꣳशदक्षरा
ृहती तं दक्षिणतऽउदञ्चमाहरति दक्षिणतो वाँ[9] ऽउदग्योनौ रेतः
सिच्यतऽएषोऽस्यैतर्हि योनिरविच्छेदमाहरति रेतसोऽविच्छेदाय
१०॥ Cf. का. श. ८. ४. २; तै. सं. ५. १. ४; मै. सं. ३. १.
; कठ. १९. ४, ५; कपि. सं. ३०. २, ३.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे षष्ठकाण्डे
तृतीयप्रपाठके तृतीयं ब्राह्मणम् ॥ (अ. ४. २.)

---

१. मा. सं. ११. ३६.    २. दीदिवाँ ३ऽअसददिति. ख.
३, ४. मा. सं. ११. ३६.    ५-७. मा. सं. ११. ३७.
८. खट्त्रिꣳशदिति. क.    ९. वा इति. च.

६. ३. ४.

अथ तत्रापऽउपनिनयति । य्यद्वाऽअस्यै क्षतं य्यद्विलिष्टमद्भि-र्व्वै तत्सन्धीयतेऽद्भिरेवास्याऽएतत्क्षतं व्विलिष्टꣳ सन्तनोति सन्द-धाति ॥१॥ "अपो देवीरुपसृज । मधुमतीरयक्ष्माय प्रजाभ्य"ऽइति रसो वै मधु रसवतीरयक्ष्मत्वाय प्रजाभ्य ऽइत्येत"त्तासामास्थानादु-ज्जिहतामोषधयः सुपिप्पला"ऽइत्यपां वाऽआस्थानादुज्जिहतऽओ-षधयः सुपिप्पलाः ॥२॥ अथैनां व्वायुना सन्दधाति । य्यद्वाऽअस्यै क्षतं य्यद्विलिष्टं व्वायुना वै तत्संधीयते व्वायुनैवास्याऽएतत्क्षतं व्विलिष्टꣳ सन्तनोति सन्दधाति ॥३॥

( काण्डस्यार्द्धम् २६५ )

"सन्ते व्वायुर्मातरिश्वा दधा"त्विति । अयं वै व्वायुर्म्मातरिश्वा य्योऽयं पवतऽ"उत्तानाया हृदयं य्यद्विकस्त"मित्युत्तानाया ह्यस्याऽ एतद्धृदयं व्विकस्तं "य्यो देवानाञ्चरसि प्राणथेने"त्येष हि सर्व्वेषान्दे-वानाञ्चरति प्राणथेन "कस्मै देव व्वषडस्तु तुभ्य"मिति प्रजापतिर्व्वै कस्तस्माऽएवैतदिमां व्वषट्करोति नो हैतावत्यन्याहुतिरस्ति य्यथै-षा ॥४॥ अथैनां दिग्भिः सन्दधाति । य्यद्वाऽअस्यै क्षतं य्यद्विलिष्टं दिग्भिर्व्वै तत्सन्धीयते दिग्भिरेवास्याऽएतत्क्षतं व्विलिष्टꣳ सन्तनो-ति सन्दधाति सऽ इमाश्चेमाश्च दिशौ सन्दधाति तस्मादेते दिशौ सꣳहितेऽअथेमाश्चेमाश्च तस्माद्धैवैते सꣳहितेऽइत्यग्रे ऽथेति । अथे-त्यथेति तद्दक्षिणावृत्ताद्धि देवत्रानयानया वै भेषजं क्रियतेऽनयैवैना-मेतद्भिषज्यति ॥५॥ अथ कृष्णाजिनञ्च पुष्करपर्णञ्च समुद्गृह्णाति । य्योनिर्व्वै पुष्करपर्णं य्योन्या तद्रेतः सिक्तꣳ समुद्गृह्णाति त-स्माद्योन्या रेतः सिक्तꣳ समुद्गृह्यते "सुजातो ज्योतिषा सह

१, २. मा.सं. ११. ३८. ३, ५, ७. मा.सं. ११. ३९. ६. चरति इति.ख.
८. यथैषा इति. च. ९. भिषज्यति इति. घ. १०. मा.सं. ११.४०.

शर्म्म वरूथमासदत्स्व''रिति सुजातो ह्येष ज्योतिषा सह शर्म्म चैतद्वरूथश्च स्वश्चासदिति ॥६॥ अथैनमुपनह्यति । योनौ तद्रेतो युनक्ति तस्माद्योनौ रेतो युक्तं न निष्पद्यते योक्त्रेण योक्त्रेण हि योग्यं युञ्जन्ति मौञ्जेन त्रिवृता तस्योक्तो बन्धुः ॥७॥ तत्पर्यस्यति । ''[2]वासोऽअग्ने विश्वरूपꣳ संव्ययस्व विभावस''विति वरुण्या वै यज्ञे रज्जुरवरुण्यमेवैनदेतत्कृत्वा यथा वासः परिधापयेदेवं परि[3]धापयति ॥८॥ अथैनमादायोत्तिष्ठति । असौ वा ऽआदित्यऽएषोऽग्निरमुं तदादित्यमुत्थापय''[4]त्युदु तिष्ठ स्वध्वरे''त्यध्वरो वै यज्ञ ऽउदु तिष्ठ सुयज्ञियेत्येतद''[5]वा नो देव्या धिये''ति या ते दैवी धीस्तया नोऽवेत्येत''दृशे [6]च भासा बृहता सुशुक्वनि''रिति दर्शनाय च भासा बृहती सुशुक्वनिरित्येतदा''ग्ने [7]याहि सुशस्तिभि''रिति ये वोढारस्ते सुशस्तय ऽ आग्ने याहि वोढृभिरित्येतत् ॥ ९ ॥

( अर्द्धप्रपाठकः )

अथैनमित ऽऊर्ध्वं प्राञ्चं प्रगृह्णाति । असौ वाऽआदित्यऽएषोऽग्निरमुं तदादित्यमितऽऊर्ध्वं प्राञ्चं दधाति तस्मादसावादित्यऽइतऽऊर्ध्वः प्राङ् धीयतऽ''ऊर्ध्वऽऊ षु णऽऊतये तिष्ठा देवो न सविते''ति यथैव यजुस्तथा बन्धु''रूर्ध्वो वाजस्य सनिते''त्यूर्ध्वो वाऽएष तिष्ठन्वाजमन्नꣳ सनोति ''[9]यदञ्जिभिर्वाघद्भिर्विह्वयामह''ऽइति रश्मयो वाऽएतस्याञ्जयो वाघतस्तानेतदाह परोबाहु प्रगृह्णाति परोबाहु ह्येषऽइतोऽथैनमुपावहरति तमुपावहृत्योपरिनाभि धारयति तस्योपरि बन्धुः ॥ १० ॥ का. श. ८. ४. २; तै. सं. ५. १. ५; मै. सं. ३. १. ५; काठ. १९. ५; कपि. सं. ३०. ३;

इति माध्यन्दिनशाखीये शतपथब्राह्मणे षष्ठकाण्डे
तृतीयप्रपाठके चतुर्थं ब्राह्मणम् ॥ (अ. ४. ३. )

---

१. आसीददिति इति. च.　२. मा.सा. ११.४०.　३. परिधापयति. इति, च
४–७, मा.सं. ११.४१.　८. एतत् इति. च.　९–११. मा. सं. ११. ४२.

## ६. ३. ५.

### ( उखानिर्माणव्यापारः )

हस्तऽएव भवत्यथ पशूनभिमन्त्रयते । एतद्वाऽएषु देवाः सम्भरिष्यन्तः पुरस्ताद्वीर्यमदधुस्तथैवैष्वयमेतत्सम्भरिष्यन् पुरस्ताद्वीर्यन्दधाति ॥१॥ सोऽश्वमभिमन्त्रयते । "सं जातो गर्भोऽअसि रोदस्यो"रितीमे वै द्यावापृथिवी रोदसी तयोरेष जातो गर्भोऽ"ग्ने चारुर्व्विभृतऽओषधी"ष्विति सर्व्वासु ह्येष चारुर्व्विभृतऽओषधिषु "चित्रः शिशुः परि तमाᳪंस्यक्कू"निति चित्रो वाऽएष शिशुः परेण तमाᳪंस्यक्कूनतिरोचते "प्र मातृभ्योऽअधि कनिक्रदद्गा"ऽइत्योषधयो वाऽएतस्य मातरस्ताभ्यऽएव कनिक्रदत्प्रैति तदश्वे व्वीर्यं दधाति ॥२॥ अथ रासभᳪं । "स्थिरो भव व्वीड्वङ्गऽआशुर्भव व्वाज्यर्व्व"न्निति स्थिरश्च भव व्वीड्वङ्गश्चाशुश्च भव व्वाजी चार्व्वन्नित्येत"त्पृथुर्भव सुषदस्त्वमग्नेः पुरीषवाहण"ऽइति पृथुर्भव सुशीमस्त्वमग्नेः पशव्यवाहन ऽइत्येतत्तद्रासभे व्वीर्यं दधाति ॥३॥ अथाजᳪं । "शिवो भव प्रजाभ्यो मानुषीभ्यस्त्वमङ्गिर"ऽइत्यङ्गिरा वाऽअग्निराग्नेयोऽजः शमयत्येवैनमेतदहिᳪंसायै "मा द्यावापृथिवीऽअभिशोचीर्म्मान्तरिक्षं मा व्वनस्पतीनि"त्येतत्सर्व्वं मा हिᳪंसीरित्येतत्तदजे व्वीर्यं दधाति ॥४॥ त्रिभिरभिमन्त्रयते । त्रिवृदग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैष्वेतद्वीर्यं दधाति ॥५॥ अथैनमेतेषां पशूनामुपरिष्टात् प्रगृह्णाति । तदेनमेतैः पशुभिः संभरति नोपस्पृशति व्वज्रो वै पशवो रेतऽइदं नेदिदᳪं रेतो व्वज्रेण हिनसानीत्यथोऽअग्निरयं पशवऽइमे नेदयमग्निरिमान्पशून् हिनसदिति ॥६॥ तमश्वस्योपरिष्टात्प्रगृह्णाति । "प्रैतु व्वाजी कनिक्रद"दिति प्रैतु व्वाजी कनिक्रदद्यजमानऽइत्येत"न्नानदद्रासभः पत्वे"ति तद-

---

१. वीर्यमिति. घ. २–५. मा.सं. ११ ४३. ६, ७. मा.सं. ११ ४४. ८, ९. मा. सं. १०. ४५. १०. त्रिवृत् इति. घ. ११–१२, मा.सं. १०.४६.

वस्य यजुषि रासभं निराह तद्रासभे शुचन्दधाति "भरन्नग्निं पुरीष्यं मा पाद्यायुषः पुरे"ति भरन्नग्निं पशव्यं मोऽस्मात्कर्मणः पुरा पादीत्येतत्तदेनमश्वेन संभरति ॥७॥ अथ रासभस्य। "वृषाग्निं वृषणं भर"न्निति वृषा वाऽअग्निर्वृषा रासभः स वृषा वृषाणं भरत्य"पां गर्भंꣳ समुद्रिय"मित्यपाꣳ ह्येष गर्भः समुद्रियस्तदेनꣳ रासभेन संभरति ॥८॥ अथापादत्ते। "अग्नऽआयाहि वीतय"ऽइत्युपैतवऽइत्येतत्तदेनं ब्रह्मणा यजुषैतस्माच्छौद्राद्वर्णादपादत्ते ॥९॥ अथाजस्य। "ऋतꣳ सत्यमृतꣳ सत्य"मित्ययं वाऽअग्निर्ऋतमसावादित्यः सत्यं यदि वासावृतमयꣳ सत्यमुभयम्वेतदयमग्निस्तस्मादाहर्तꣳ सत्यमृतꣳसत्यमिति तदेनमजेन संभरति ॥१०॥ त्रिभिः संभरति। त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतत्संभरति त्रिभिः पुरस्तादभिमन्त्रयते तत्षट् तस्योक्तो बंधुः ॥११॥ अथैतान्पशूनावर्त्तयन्ति। तेषामजः प्रथमऽएत्यथ रासभोऽथाश्वो थेतो यतामश्वः प्रथमऽएत्यथ रासभोऽथाजः क्षत्रं वाऽअश्वो वैश्यं च शूद्रश्चानु रासभो ब्राह्मणमजः ॥१२॥ तद्यदितो यताम्। अश्वः प्रथमऽएति तस्मात्क्षत्रियं प्रथमं यन्तमितरे त्रयो वर्णाः पश्चादनुयन्त्यथ यदमुत ऽआयतामजः प्रथमऽएति तस्माद्ब्राह्मणं प्रथमं यन्तमितरे त्रयो वर्णाः पश्चादनुयन्त्यथ यन्नैवेतो यतां नाऽमुतो रासभः प्रथमऽएति तस्मान्न कदा चन ब्राह्मणश्च क्षत्रियश्च वैश्यश्च शूद्रश्च पश्चादन्वितस्तस्मादेवं यन्त्यपापवस्यसायाथो ब्रह्मणा चैवैतत्क्षत्रेण चैतौ वर्णावभितः परिगृह्णीतेऽनपक्रामिणौ कुरुते ॥१३॥ अथानड्वा पुरुषमीक्षते। "अग्निं पुरीष्यमङ्गिरस्वद्भराम"ऽइत्यग्निं पशव्यमग्निवद्भरामऽइत्येतत्तदेनमनड्वापुरुषेण संभरति ॥१४॥ तमज-

---

१-२ मा. सं. ११. ४६.     ३. भरन्नग्नि इति. घ.     ४. वृषणमिति. घ.
५, ७. मा. सं. ११. ४६.     ६. अथापादत्तेऽग्न इति. ख, अपादत्ते इति. च.
८. मा. सं. ११. ४७.     ९. अथाज इति. घ.     १०. यन्तमितरे इति. ख.
११. कुरुते इति घ.     १२, मा. सं. ११. ४७.     १३. इत्येतत् इति. घ.

स्योपरिष्टात्प्रगृह्णन्नेति । आग्नेयो वाऽअजः स्वेनैवैनमेतदात्मना स्वया देवतया संभरत्यथो ब्रह्म वाऽअजो ब्रह्मणैवैनमेतत्संभरति ॥१५॥ अथैनमुपावहरति । “ओषधयः[1] प्रतिमोदध्वमग्निमेतꣳ शिवमायन्तमभ्यत्र युष्मा”ऽइत्येतद्वैतस्मादायतऽओषधयो बिभ्यति यद्वै नोऽयं न हिꣳस्यादिति ताभ्यऽएवैनमेतच्छमयति प्रत्येनं मोदध्वꣳ शिवो वोऽभ्येति न वो हिꣳसिष्यतीति “व्यस्यन्विश्वाऽअनिराऽअमीवा[2] निषीदन्नोऽअप दुर्म्मतिञ्जही”ति व्यस्यन्विश्वाऽअनिराश्चामीवाश्च निषीदन्नोऽप सर्व्वं पाप्मानं जहीत्येतत् ॥१६॥ “ओषधयः[3] प्रतिगृभ्णीत । पुष्पवतीः सुपिप्पला”ऽइत्येतद्वैतासाꣳ समृद्धꣳ रूपं यत्पुष्पवत्यः सुपिप्पलाः समृद्धाऽएनं प्रतिगृह्णीतेत्येत“दयं वो[4] गर्भऽऋत्वियः प्रत्नꣳ सधस्थमासद”दित्ययं वो गर्भ ऽऋतव्यः सनातनꣳ सधस्थमासदद्[5]इत्येतत् ॥१७॥ द्वाभ्यामुपावहरति । द्विपाद्यजमानो यजमानोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदुपावहरति तं दक्षिणतऽउदञ्चमुपावहरति तस्योक्तो बंधुरुद्धतमवोक्षितं भवति यत्रैनमुपावहरत्युद्धते वाऽअवोक्षितेऽग्निमादधति सिकताऽउपकीर्णा भवन्ति तासामुपरि बंधुः ॥१८॥ परिश्रितं भवति । एतद्वै देवाऽअबिभयुर्यद्वै नऽइममिह रक्षाꣳसि नाष्ट्रा न हन्युरिति तस्माऽएतां पुरं पर्यश्रयंस्तथैवास्माऽअयमेतां पुरं परिश्रयत्यथो योनिर्वाऽइयꣳ रेत ऽइदं तिरऽइव वै योनौ रेतः सिच्यते योनिरूपमेतत्क्रियते तस्मादपि स्वया जायया तिरऽइवैव चिचरिषति[6] ॥१९॥ अथैनं विष्यति । तद्यदेवास्यात्रोपनद्धस्य सꣳशुच्यति तामेवास्मादेतच्छुचं बहिर्द्धा दधात्यथोऽएतस्याऽएवैनमेतद्योनेः प्रजनयति ॥२०॥ “वि[7] पाजसा पृथुना शोशुचान”ऽइति । वि पाजसा पृथुना दीप्यमानऽइत्येत“द्बाधस्व[8] द्विषो रक्षसोऽअमीवा”ऽइति बाधस्व

---

१, २. मा. सं. ११. ४७ ३, ४. मा. सं. ११. ४८. ५. मासददिति. ख. ६. चिचरिष्यति. इति. च. ७, ८. मा. सं. ११. ४९.

सर्व्वान् पाप्मनऽइत्येत"त्सुशर्मणो बृहतः शर्मणि स्यामग्ने रहूँ सुहवस्य प्रणीता"वित्याशिषमाशास्ते[1] ॥२१॥ अथाजलोमान्याच्छिद्य[2] । उदीचः प्राचः पशून्प्रसृजत्येषा ह्योभयेषां देवमनुष्याणां दिग्यदुदीची प्राच्येतस्यां तद्दिशि पशून्दधाति तस्मादुभये देवमनुष्याः पशूनुपजीवन्ति ॥२२॥ Cf. का. श. ८. ४. ४; तै. सं. ५. १. ५; मै. सं. ३. १. ६; काठ. सं. १९. ५, ६; कपि. ३०. ४.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे षष्ठकाण्डे
तृतीयप्रपाठके पञ्चमं ब्राह्मणम् ॥ (अ.४.४.)

( इति चतुर्थोऽध्यायः )

६. ३. ६.

पर्णकषायनिष्पक्वा ऽएता ऽआपो भवन्ति । स्थेम्ने न्वेव यद्वेव पर्णकषायेण सोमो वै पर्णश्चन्द्रमा उ वै सोमऽएतद्दु वाऽएकमग्निरूपमेतस्यै वाग्निरूपस्योपाप्त्यै ॥१॥ ताऽउप सृजति । "आपो[3] हि ष्ठा मयोभुव[4]"ऽइति यां वै देवतामृगभ्यनूक्ता यां यजुः सैव देवता सक्सा देवता तद्यजुस्ता हैताऽआपऽएवैष ऋचस्तद्याऽअमूरापऽएकहं रूपहूँ समदृश्यन्त ताऽ एतास्तदेवैतद्रूपं करोति[5] ॥२॥ अथ फेनं जनयित्वा[6]न्ववदधाति । यदेव तत्फेनो द्वितीयहूँ रूपमसृज्यत तदेवैतद्रूपङ्करोत्यथ यामेव तत्र मृदहं संयौति सैव मृद्यत्ततृतीयहूँ रूपमसृज्यतैतेभ्यो वाऽएष रूपेभ्योऽग्रेऽसृज्यत तेभ्यऽएवैनमेतज्जनयति ॥३॥ अथाजलोमैः सहूँसृजति । स्थेम्ने न्वेव यद्वेवाजलोमैरेतद्वाऽएनं देवाः पशुभ्योऽधि समभरंस्तथैवैनमयमेतत्पशुभ्योऽधि सम्भरति तद्यदजलोमैरेवाजे हि सर्व्वेषां[7] पशूनाहूँ रूपमथ[8] यल्लोम

---

१. माशास्ते इति. घ. मा शास्ते इति घ.

२. आच्छिद्योदीचः इति ख, आच्छिद्य । उदीच इति ग, घ.

३. मा. सं. ११. ५०. ४. मयोभुव इति. ग, थ. ५. करोति इति. ख, च.

६. जनयति. इति. ख. ७. सर्वेषां इति. घ. ८. रूपमथ इति. ख.

लोम हि रूपम् ॥४॥ "मित्रः सᳬं सृज्य । पृथिवीं भूमिञ्च ज्योतिषा सहे"ति प्राणो वै मित्रः प्राणो वाऽएतदग्रे कर्म्माकरो"त्सुजातं जातवेदसमयक्ष्माय त्वा सᳬं सृजामि प्रजाभ्य"ऽइति यथैव यजुस्तथा बंधुः ॥५॥ अथैतत्त्रयं पिष्टं भवति । शर्कराश्मायोरसस्तेन सᳬं सृजति स्थेम्ने न्वेव यद्वेव तेनैतावती वाऽइयमग्रेऽसृज्यत तद्यावतीयमग्रेऽसृज्यत तावतीमेवैनमेतत्करोति ॥६॥ "रुद्राः सᳬं सृज्य । पृथिवीं बृहज्ज्योतिः समीधिरे"ऽइत्यसौ वाऽआदित्य ऽएषोऽग्निरेतद्ध तद्रुद्राः सᳬं सृज्य पृथिवीं बृहज्ज्योतिः समीधिरे "तेषां भानुरजस्रऽइच्छुक्रो देवेषु रोचत"ऽइत्येष वाऽएषां भानुरजस्रः शुक्रो देवेषु रोचते ॥७॥ द्वाभ्याᳬं सᳬं सृजति । द्विपाद्यजमानो यजमानोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनामेतत्सᳬं सृजति ॥८॥ अथ प्रयौति । "सᳬं सृष्टां वसुभी रुद्रै"रिति सᳬं सृष्टा ह्येषा वसुभिश्च रुद्रैश्च भवति यन्मित्रेण तद्वसुभिर्यद्रुद्रैस्तद्रुद्रै"र्धीरैः कर्म्मण्यां मृद"मिति धीरा हि ते कर्म्मण्योऽइयं मृद्"हस्ताभ्यां मृद्वीं कृत्वा सिनीवाली कृणोतु ता"मिति वाग्वै सिनीवाली सैनाᳬं हस्ताभ्यां मृद्वीं कृत्वा करोत्वित्येतत् ॥९॥ "सिनीवाली सुकपर्दा सुकुरीरा स्वौपशे"ति । योषा वै सिनीवाल्येतदु वै योषायै समृद्धᳬं रूपं यत्सुकपर्दा सुकुरीरा स्वौपशा समर्द्धयत्येवैनामेत"त्सा तुभ्यमदिते मह्योखां दधातु हस्तयो"रितीयं वाऽअदितिर्मह्यस्यै तदाह ॥१०॥ "उखां कृणोतु । शक्त्या बाहुभ्यामदितिर्द्धिये"ति शक्त्या च हि करोति बाहुभ्यां च धिया च "माता

१, २. मा. सं. ११. ५३. ३. रस इति. ख. ४. करोति. इति. च.
५, ७. मा. सं. ११. ५४. ६. समीधिरऽइति. इति. ख.
८, १०, ११. मा. सं. ११. ५५. ९. यद्रुद्रैस्तत्तद्रुद्रैरिति ग, घ.
१२, मा. सं. ११. ५६.
१३. स्त्रीभिः शृङ्गारार्थं शिरसि धार्यमाणः कनकाभरणविशेषः कुरीरः ॥ See. महीधर ११. ५६.
१४. एतत्सा ग, घ. १५. मा. सं. ११.५६. १६, १७, मा. सं. ११. ५७.

त्रं य्यथोपस्थे साग्निं बिभर्त्तु गर्भऽएʼʼति य्यथा माता पुत्रमुपस्थे बिभृयादेवमग्निं गर्भं बिभर्त्विरयेतत् ॥११॥ त्रिभिः प्रयौति । त्रिवृदग्निर्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतत्प्रयौति द्वाभ्याᳬ सᳪं सृजति तत्पञ्च पञ्चचितिकोऽग्निः पञ्चर्त्तवः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्य्यावत्यस्य मात्रा तावत्तद्भवति त्रिभिरपऽउपसृजति तद्यावष्टाक्षरा गायत्री गायत्रोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावत्तद्भवत्यथोऽअष्टाक्षरा वाऽइयमग्रेऽसृज्यत तद्यावतीयमग्रेऽसृज्यत तावतीमेवैनामेतत्करोति ॥१२॥ Cf. का. श. ८. ५. १; तै. सं. ५. १. ६, मै. सं. ३. १. ६; कठसं. १९. ६; कपि. ३०. ४.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे षष्ठकाण्डे

तृतीयप्रपाठके षष्ठं ब्राह्मणम् ॥ ( अ. ५. १. )

## ६. ३. ७.

### ( उखानिर्माणम् )

अथ मृत्पिण्डमुपादत्ते । य्यावन्तं निधयेऽलं मन्यते “मखस्य[२] शिरोऽसीʼʼति यज्ञो वै मखस्तस्यैतच्छिरऽआहवनीयो वै य्यज्ञस्य शिरऽआहवनीयमु वाऽएतं चेष्यन्भवति तस्मादाह मखस्य शिरोऽसीति ॥१॥ य्यद्वेवाह मखस्य शिरोसीति । जायतऽएषऽएतद्यच्चीयते शीर्षतो वै मुखतो जायमानो जायते शीर्षतो मुखतो जायमानो जायाताऽइति ॥२॥ तं प्रथयति । “व्वसवस्त्वा[३] कृण्वन्तु गायत्रेण छन्दसाङ्गिरस्वʼʼदित्ययᳪं हैष लोको निधिस्तमेतद्वसवो गायत्रेण छन्दसाकुर्व्वंस्तथैवैनमयमेतद्गायत्रेण छन्दसा करोत्यङ्गिरस्वदिति प्राणो वाऽअङ्गिरा “ध्रुवासीʼʼति स्थिरासीत्येतदथो प्रतिष्ठितासीति “पृथिव्यसीʼʼति पृथिवी ह्येष निधिʼʼ“धारया मयि प्रजाᳪं रायस्पोषं गौपत्यᳪं सुवीर्यᳬ सजातान्यजमानायेʼʼत्येतद्वै व्वसवऽइमंल्लोकं कृत्वा तस्मिन्नेतामाशिषमाशासत तथैवैतद्यजमानऽइमंल्लोकं

१. त्रिभिरिति. ग, ध.     २. मा.स.११.५७.     ३-६. मा. सं. ११. ५८.

कृत्वा तस्मिन्नेतामाशिषमाशास्ते तां प्रादेशमात्रीं कृत्वाथास्यै सर्व्वं-तस्तीरमुन्नयति ॥३॥ अथ पूर्व्वमुद्धिमादधाति । "[१]रुद्रास्त्वा कृण्वन्तु त्रैष्टुभेन छन्दसाङ्गिरस्व"दित्यन्तरिक्षᳬं हैषऽउद्धिस्तमेतद्रुद्रास्त्रैष्टुभेन छन्दसाकुर्व्वंस्तथैवैनमयमेतत्त्रैष्टुभेन छन्दसा करोत्यङ्गिरस्वदिति प्राणो वाऽअङ्गिरा "[३]ध्रुवासी"ति स्थिरासीत्यतदथो प्रतिष्ठितासी"[३]त्यन्तरिक्षमसी"त्यन्तरिक्षᳬं ह्येष ऽउद्धि"र्द्धारया मयि प्रजाᳬं रायस्पोषं गौपत्यᳬं सुवीर्यᳬं सजातान्यजमानाये"त्येतद्वै रुद्राऽअन्तरिक्षं कृत्वा तस्मिन्नेतामाशिषमाशासत तथैवैतद्यजमानोऽन्तरिक्षं कृत्वा तस्मिन्नेतामाशिषमाशास्ते ताᳬं संलिप्य सᳬंश्लक्ष्णय ॥४॥ अथोत्तरमुद्धिमादधाति । "[६]आदित्यास्त्वा कृण्वन्तु जागतेन छन्दसाङ्गिरस्व"दिति द्यौर्हैष ऽउद्धिस्तमेतदादित्या जागतेन छन्दसाकुर्व्वंस्तथैवैनमयमेतज्जागतेन छन्दसा करोत्यङ्गिरस्वदिति प्राणो वाऽअङ्गिरा "[६]ध्रुवासी"ति स्थिरासीत्येतदथो प्रतिष्ठितासीति "[७]द्यौरसी"ति द्यौर्ह्येषऽउद्धि"[८]र्द्धारया मयि प्रजाᳬं रायस्पोषं गौपत्यᳬं सुवीर्यᳬं सजातान्यजमानाये"त्येतद्वाऽआदित्या दिवं कृत्वा तस्यामेतामाशिषमाशासत तथैवैतद्यजमानो दिवं कृत्वा तस्यामेतामाशिषमाशा[९]स्ते ॥५॥ अथैतेन चतुर्थेन यजुषा करोति । "[१०]विश्वे त्वा देवा वैश्वानराः कृण्वन्त्वानुष्टुभेन छन्दसाङ्गिरस्व"दिति दिशो हैतद्यजुरेतद्वै विश्वेदेवा वैश्वानराऽएषु लोकेषूखायामेतेन चतुर्थेन यजुषा दिशोऽदधुस्[११]तथैवैतद्यजमान ऽएषु लोकेषूखायामेतेन चतुर्थेन यजुषा दिशो दधात्याङ्गिरस्वदिति प्राणो वाऽ अङ्गिरा "[१२]ध्रुवासी"ति स्थिरासीत्येतदथो प्रतिष्ठितासीति "[१]दिशोऽसी"ति दिशो ह्येतद्यजु"[१३]र्द्धारयां मयि प्रजाᳬं रायस्पोषं गौपत्यᳬं सुवीर्यᳬं सजातान्यजमानाये"त्येतद्वै विश्वे देवा वैश्वानरा दिशः कृत्वा तास्वेतामाशिषमाशासत तथैवैतद्यजमानो दिशः कृत्वा तास्वे-

१-८. मा.सं. ११.५८. ९. माशास्ते इति. ख, ग, घ,

१०, १२, १३. मा. सं. ११. ५८. ११. स्तथैवैनमिति. ख.

माशिषमाशास्ते ॥६॥ तेनैतेनान्तरतश्च बाह्यतश्च करोति । तस्मादे-
ल्लोकानामन्तरतश्च बाह्यतश्च दिशोऽपरिमितमेतेन करोत्यपरिमिता
दिशः ॥७॥ तां प्रादेशमात्रीमेवोर्ध्वाङ्करोति । प्रादेशमात्रीं तिरश्चीं
देशमात्रो वै गर्भो विष्णुर्य्योनिरेषा गर्भसंमितां तद्योनिङ्करोति
८॥ सा यदि वर्षीयसी प्रादेशात्स्यात् । एतेन यजुषा ह्रसीयसीं
र्याद्यदि ह्रसीयस्येतेन वर्षीयसीꣳ ॥९॥ स यद्येकः पशुः स्यात् ।
कप्रादेशां कुर्यादथ यदि पञ्च पशवः स्युः पञ्चप्रादेशां कुर्यादिषु-
त्रीं वा वीर्षं वाऽइषुर्व्वीर्षसंमितैव तद्भवति पञ्चप्रादेशा ह स्म
ाव पुरेषुर्भवति ॥१०॥ अथ तिरश्चीꣳ रास्नां पर्यस्यति । दिशो
व सैतद्वै देवाऽइमाँल्लोकानुखां कृत्वा दिग्भिरदृꣳहन्दिग्भिः पर्यत-
ंस्तथैवैतद्यजमान ऽइमाँल्लोकानुखां कृत्वा दिग्भिर्दृꣳहति दिग्भिः
रितनोति ॥११॥ तामुत्तरे वितृतीये पर्यस्यति । अत्र हैषाँल्लोका-
ामन्ताः समायन्ति तदेवैनांस्तदृꣳहति[1] ॥१२॥ "अदित्यै रास्ना"[2]सी-
ा । वरुण्या वै यज्ञे रज्जुरवरुण्यामेवैनामेतद्रास्नां कृत्वा पर्यस्य[3]-
ा ॥१३॥ अथ चतस्रऽऊर्ध्वाः करोति । तूष्णीमेव दिशो हैव ताऽ-
तद्वै देवा ऽइमाँल्लोकानुखां कृत्वा दिग्भिः सर्व्वतो दृꣳहंस्तथैवैत-
जमानऽइमाँल्लोकानुखां कृत्वा दिग्भिः सर्व्वतो दृꣳहति ॥१४॥
ाऽएता ऽएतस्यै भवन्ति । एतद्वाऽएताऽएतामस्त[4]भ्नुवंस्तथैवैनामे-
त्स्तभ्नुवन्ति तद्यदुत ऽऊर्ध्वन्तदेतया तिरश्च्या दृढमथ यद[5]तो-
र्ॉक्तदेताभिः ॥१५॥ तासामग्रेषु स्तनानुन्न[6]यति । एतद्वै देवाऽइमां-
ोकानुखां कृत्वैतैस्तनैः[7] सर्व्वान् कामानदुहत तथैवैतद्यजमानऽ-
माँल्लोकानुखां कृत्वैतैस्स्तनैः सर्व्वान् कामान्दुहे[8] ॥१६॥ सैषा गौ-
व । इमे वै लोकाऽउखेमे[9] लोका गौस्तस्याऽएतदूधो यदेषा तिरश्ची

१. दृꣳहति इति. च.	२. मा. सं. ११.५९.	३. पर्यवस्यति इति. च.
४. अस्तभ्नुवन्निति.ग, घ.	५. यदतो इति. घ.	६. उन्नयन्तीति. ग, घ.
७, स्तनैरिति. ग, घ.	८. दुहे इति. च.	९. उखेमे लोका इति. घ.

रास्ना सा विद्वतृतीये भवति विद्वतृतीये हि गोरूधः ॥१७॥ तस्यै स्तनानुन्नयति । ऊधसस्तत्स्तनानुन्नयति सा चतुस्तना भवति चतुस्तना हि गौः ॥१८॥ ताᳬं हैके द्विस्तनां कुर्व्वन्ति । अथो ऽअष्टस्तनां न तथा कुर्य्याद्ये वै गोः कनीयस्तनाः पशवो ये भूयस्तनाऽअनुपजीवनीयतरा वाऽअस्यैतेऽनुपजीवनीयतराᳬं हैनां ते कुर्व्वते-ऽथो ह ते न गां कुर्व्वते शुनीं वाविं वा वडबां वा तस्मात्तथा न कुर्य्यात् ॥१९॥ अथास्यै बिलमभिपद्यते । "अदितिष्टे बिलं गृभ्णा"त्विति वाग्वा ऽअदितिरेतद्वा ऽएनां देवाः कृत्वा वाचादित्या निरष्ठापयंस्तथैवैनामयमेतत्कृत्वा वाचादित्या निष्ठापयति ॥२०॥ तां परिगृह्य निदधाति । "कृत्वाय सा महीमुखा"मिति कृत्वाय सा महतीमुखामित्येत"न्मृन्मयीं योनिमग्नय"ऽइति मृन्मयी ह्येषा योनिरग्नेः "पुत्रेभ्यः प्रायच्छददितिः श्रपया"नित्येतद्वाऽएनामदितिः कृत्वा देवेभ्यः पुत्रेभ्यः श्रपणाय प्रायच्छत्तथैवैनामयमेतत्कृत्वा देवेभ्यः श्रपणाय प्रयच्छति ॥२१॥ ता हैके तिस्रः कुर्व्वन्ति । त्रयो वा ऽइमे लोका ऽइमे लोका ऽउखा ऽइति वदन्तोऽथो ऽअन्योन्यस्यै प्रायश्चित्यै यदीतरा भेत्स्यतेऽथेतरस्यां भरिष्यामो यदीतराथेतरस्यामिति न तथा कुर्य्याद्यो वाऽएष निधिः प्रथमोऽयᳬं स लोको यः पूर्व्वेऽउद्धिरन्तरिक्षं तद्यऽ उत्तरो द्यौः साथ यदेतच्चतुर्थं यजुर्द्दिशो हैव तदेतावद्वाऽइदᳬं सर्व्वं यावदिमे च लोका[6] दिशश्च स यदत्रोपाहरेदति तद्रेचयेद्यद्वु वै यज्ञेऽतिरिक्तं क्रि[7]

१. अत्र 'द्विःस्तनां करोति द्यावापृथिव्योर्दोहाय····अष्टास्तनां करोति च्छन्दसां दोहाय' ( तै. सं. ५. १. ६. ४. ) इति तै. संहितावचनमनुसन्धेयम् ॥ अत्राऽष्टस्तनत्वे शुनीसादृश्यं द्विस्तनत्वेऽविवडबासादृश्यं च बोध्यम् ॥

२. मा. सं. ११. ५९. ३-५. मा. सं. ११. ५९.

६. लोका. इति. ग, घ. ७. क्रियते इति. ग, घ.

यजमानस्य तद्द्विषन्तं भ्रातृव्यमभ्यतिरिच्यते यदु भिन्नायै
श्चित्तिरुत्तरस्मिंस्तदन्वाख्याने ॥२२॥ Cf का. श. ८. ५. २; तै.
. १. ६; मै. सं. ३. १. ७; कठ. सं. १९. ६; कपि. सं. ३०. ४.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे षष्ठकाण्डे
तृतीयप्रपाठके सप्तमं ब्राह्मणम् ॥ (अ. ५. २)

तृतीयः प्रपाठकस्समाप्तः ॥

( कण्डिकासंख्या ११४ )

## अथ चतुर्थः प्रपाठकः ॥

६. ४. १.

( अषाढेष्टकानिर्माणम् )

तस्या ऽएतस्या ऽअषाढां पूर्व्वाङ्करोति । इयं वाऽअषाढेयमु
वांल्लोकानां प्रथमासृज्यत तामेतस्याऽएव मृदः करोत्येषाᳫँ
ोकानामियं महिषी करोति महिषी हीयं तद्यैव प्रथमा वि-
ा महिषी ॥१॥ पादमात्री भवति । प्रतिष्ठा वै पाद ऽइयमु वै
ा त्र्यालिखिता भवति त्रिवृद्धीयम् ॥२॥ अथोखाङ्करोति ।
ाल्लोकान् करोत्यथ विश्वज्योतिषः करोत्येता देवताऽअग्नि
ादित्यमेता ह्येव देवता विश्वं ज्योतिस्ता ऽएतस्या ऽएव मृ-
रोत्येभ्यस्तल्लोकेभ्य ऽएतान्देवान्निर्म्मिमीते यजमानः करोति
ालिखिता भवन्ति त्रिवृतो ह्येते देवा ऽइत्यधिदेवतम् ॥३॥ अथा-
म् । आत्मैवोखा वागषाढा तां पूर्व्वां करोति पुरस्ताद्धीयमा-
वाक्तामेतस्या ऽएव मृदः करोत्यात्मनो ह्येवेयं वाङ्महिषी
ा महिषी हि वाक्त्र्यालिखिता भवति त्रेधा विहिता हि वा-
यजूᳫँषि सामान्यथो यदिदं त्रयं वाचो रूपमुपाᳫँशु

प्रथमा इति. घ. २. मादित्य इति. ग, घ.

व्यन्तरामुच्चैः ॥४॥ अथोखाङ्करोति । आत्मानं तत्करोत्यथ
विश्वज्योतिषः करोति प्रजा वै विश्वज्योतिः प्रजा ह्येव विश्वं
ज्योतिः प्रजननमेवैतत्करोति ता ऽएतस्या ऽएव मृदः करोत्या·
त्मनस्तत्प्रजां निर्म्मिमीते यजमानः करोति यजमानस्तदा·
त्मनः प्रजां करोत्यनन्तर्हिताः करोत्यनन्तर्हितां तदात्मनः प्रजां
करोत्युत्तराः करोत्युत्तरां तदात्मनः प्रजां करोति त्र्यालिखिता
भवन्ति त्रिवृद्धि प्रजातिः पिता माता पुत्रोऽथो गर्भ ऽउल्बञ्ज·
रायु ॥५॥ ता ऽएता यजुष्कृतायै करोति । अयजुष्कृताया ऽइतरा
निरुक्ता ऽएता भवन्त्यनिरुक्ता ऽइतराः परिमिता ऽएता भवन्त्यप·
रिमिता ऽइतराः ॥६॥ प्रजापतिरेषोऽग्निः । उभयम्वेतत्प्रजापतिर्निरु·
क्तश्चानिरुक्तश्च परिमितश्चापरिमितश्च तद्या यजुष्कृतायै करोति य·
देवास्य निरुक्तं परिमितᳫं रूपं तदस्य तेन सँस्करोत्यथ या ऽअय·
जुष्कृतायै यदेवास्या निरुक्तमपरिमितᳫं रूपन्तदस्य तेन सँस्करोति
स ह वाऽएतᳫं सर्व्वं कृत्स्नं प्रजापतिᳫं सँस्करोति यऽएवं वि·
द्वानेतदेवङ्करोत्यथोपशयायै पिण्डं परिशिनष्टि प्रायश्चित्तिभ्यः[3] ॥७॥
अथैनां धूपयति । स्थेम्ने न्वेवाथो कर्म्मणः प्रकृततायै यद्वेव धूप·
यति शिरऽएतद्यज्ञस्य यदुखा प्राणो धूमः शीर्षंस्तत्प्राणन्दधाति[4] ॥८॥
(शतम् ३७००) अश्वशकैर्द्धूपयति[5] । प्राजापत्यो वाऽअश्वः प्रजापतिर·
ग्निर्नो वा ऽआत्मात्मानᳫं हिनस्त्यहिᳫंसायै तद्वै शकेव ताद्धि ज·
ग्धं यातयाम तथो ह नैवाश्वᳫं हिनस्ति नेतरान्पशून् ॥९॥ "वसँ·
वस्त्वा धूपयन्तु । गायत्रेण छन्दसाङ्गिरस्वद्रुद्रास्त्वा धूपयन्तु त्रैष्टु·
भेन छन्दसाङ्गिरस्वदादित्यास्त्वा धूपयन्तु जागतेन छन्दसाङ्गिरस्वद्वि·
श्वे त्वा देवा वैश्वानरा धूपयन्त्वानुष्टुभेन छन्दसाङ्गिरस्वदिन्द्रस्त्वा[7]

---

१. त्यात्मन इति. ग, घ. २. त्रिवृद्धि इति. ग, घ.
३. प्रायश्चित्तिभ्य इति ख, प्रायश्चित्तिभ्य इति च. ४. दधाति इति. ग, घ.
५. अश्वशकैरिति. ख. ६. मा. सं. ११. ६०. ७. दिन्द्र इति. गघ,.

पयतु वरुणस्त्वा धूपयतु विष्णुस्त्वा धूपयत्वि"त्येताभिरेवैनामेत-
वेताभिर्द्धूपयति ॥१०॥ सप्ताश्वशकानि भवन्ति । सप्त यजूंषि
ततय ऽएता देवताः सप्त शीर्षन्प्राणा यद्दु वाऽअपि बहुकृत्वः
सप्त सप्तैव तच्छीर्षण्येव तत्सप्त प्राणान्दधाति ॥११॥ Cf. का.
. ५. ३; तै. सं. ५. १. ७; मै. सं. ३. १. ७; काठ. १९. ६;
पि. ३०. ४.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे षष्ठकाण्डे
चतुर्थप्रपाठके प्रथमं ब्राह्मणम् ॥ ( अ. ५. ३ )

६. ४. २.

अथैनमस्यां खनति । एतद्वै देवाऽअबिभयुर्यद्वै नऽइममिह र-
क्षांसि नाष्ट्रा न हन्युरिति तस्माऽइमामेवात्मानमकुर्वन्गुप्त्याऽआ-
त्मात्मानं गोप्स्यतीति ॥१॥ तं वाऽअदित्या खनति । इयं वाऽअदि-
तेर्नो वाऽआत्मात्मानꣳ हिनस्त्यहिꣳसायै यदन्यया देवतया खने-
द्धिꣳस्याद्धैनम् ॥२॥ "अदितिष्ट्वा देवी विश्वदेव्यावती । पृथिव्याः स-
धस्थेऽअङ्गिरस्वत्खनत्ववट"इत्यवटो ह्येष देवत्रात्र सा वैणव्यभ्रिरुत्सी-
ति चतुःस्रक्तिरेष कूपो भवति चतस्रो वै दिशः सर्व्वाभ्यऽएवैनमे-
द्दिग्भ्यः खनत्यथ पचनमवधायाषाढामवदधाति तूष्णीमेव ताꣳहि
पूर्व्वाङ्करोति ॥३॥ अथोखामवदधाति । "देवानां त्वा पत्नीर्देवीर्व्वि-
श्वदेव्यावतीः पृथिव्याः सधस्थेऽअङ्गिरस्वद्दधतूख"ऽइति देवानाꣳ
हैतामग्रे पत्नीर्देवीर्व्विश्वदेव्यावतीः पृथिव्याः सधस्थेऽङ्गिरस्वद्दधु-
स्ताभिरेवैनामेतद्दधाति ता ह ताऽओषधयऽएवौषधयो वै देवानां
पत्न्यऽओषधिभिर्हीदꣳसर्व्वꣳहितमोषधिभिरेवैनामेतद्दधात्यथ वि-
श्वज्योतिषोऽवदधाति तूष्णीमेवाथ पचनमवधायाभीन्धे ॥४॥ "धिष-

१. देवताभिरिति. ख, ग, घ. २. भवन्ति इति. ग, घ. ३. यद्वै इति ख.
४. मा. सं. ११. ६१. ५. चतुरिति. घ.
६. करोति. इति ग, घ, करोति इति. च. ७, ८ मा. सं. ११. ६१.

णास्त्वा देवीः । विश्वदेव्यावतीः पृथिव्याः सधस्थेऽअङ्गिरस्वदभीन्ध-
तामुख''ऽइति धिषणा हैतामग्रे देवीर्विश्वदेव्यावतीः पृथिव्याः सध-
स्थेऽङ्गिरस्वदभीधिरे ताभिरेवैनामेतदभीन्धे सा ह सा व्वागेव व्वा-
ग्वै धिषणा व्वाचा हीदᳪं सर्व्वमिद्धं व्वाचैवैनामेतदभीन्धेऽथैतानि
त्रीणि य्यजूᳪंष्यीक्षमाणऽएव जपति ॥५॥ ''[1]व्वरूत्रीष्ट्वा देवीः ।
विश्वदेव्यावतीः पृथिव्याः सधस्थेऽअङ्गिरस्वच्छ्रपयन्तूख''ऽइति व्व-
रूत्रीर्हैतामग्रे देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थेऽङ्गिरस्वच्छ्र-
पयाञ्चक्रुस्ताभिरेवैनामेतच्छ्रपयति तानि ह तान्यहोरात्राण्येवाहो-
रात्राणि वै व्वरूत्रयोऽहोरात्रैर्हीदᳪं सर्व्वं वृतमहोरात्रैरेवैनामेतच्छ्र-
पयति ॥६॥ ''[2]ग्नास्त्वा देवीः । विश्वदेव्यावतीः पृथिव्याः सधस्थे-
ऽअङ्गिरस्वत्पचन्तूख''इति ग्ना हैतामग्रे देवीर्विश्वदेव्यावतीः पृथि-
व्याः सधस्थेऽङ्गिरस्वत्पेचुस्ताभिरेवैनामेतत्पचति तानि ह तानि
छन्दाᳪंस्येव छन्दाᳪंसि वै ग्नाश्[3]छन्दोभिर्हि स्वर्गल्लोकं गच्छन्ति
छन्दोभिरेवैनामेतत्पचति ॥७॥ ''[4]जनयस्त्वाच्छिन्नपत्रा देवीः । वि-
श्वदेव्यावतीः पृथिव्याः सधस्थेऽअङ्गिरस्वत्पचन्तूख''ऽइति जनयो
हैतामग्रेऽच्छिन्नपत्रा देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थेऽङ्गिरस्व-
त्पेचुस्ताभिरेवैनामेतत्पचति तानि ह तानि नक्षत्राण्येव नक्षत्राणि वै
जनयो ये हि [5]जनाः पुण्यकृतः स्वर्गल्लोकं य्यन्ति तेषामेतानि
ज्योतीᳪंषि नक्षत्रैरेवैनामेतत्पचति ॥८॥ स वै खनत्येके[6]न । अवद-
धात्येकेनाभीन्धऽएकेन श्रपयत्येकेन द्वाभ्यां पचति तस्माद्द्विः संव-
त्सरस्यान्नं पच्यते तानि षट् सम्पद्यन्ते षड्ऋतवः संवत्सरः संवत्स-
रोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावत्तद्[7]भवति ॥९॥ अथ ''[8]मित्र-
स्य चर्षणीधृत''ऽइति । मैत्रेण य्यजुषोपन्याचरति य्यावत्कियच्चो-

१, २, ४, मा. सं. ११. ६१.   ३. छन्दोभिर्हि स्वर्गं लोकं गच्छन्ति इति. ख

५ See. तै. सं. ५. ४. १. ३ सुकृतां वा एतानि ज्योतीᳪंषि यन्नक्षत्राणि ।

६. त्येकेन । अव इति. ग, घ.   ७. भवति इति. च   ८. मा. सं. ११. ६२.

पन्याचरति न वै मित्रः[1] कञ्चन हिनस्ति न मित्रं कञ्चन हिनस्ति तथो हैषऽएतां न हिनस्ति नोऽएतमेषा तां द्विवैवोपवपेद्विवोद्वपे-दद्वह्याग्नेयम् ॥१०॥ ताᳬं सावित्रेण यजुषोद्वपति । सविता वै प्रसविता सवितृप्रसूतऽएवैनामेतदुद्वपति "देवस्त्वा[2] सवितोद्वपतु सुपाणिः स्वङ्गुरिः सुबाहुरुत शक्त्ये"ति सर्व्वमु ह्येतत्सविता[3] ॥११॥ अथैनां पर्य्यावर्त्तयति[4] । "अव्यथमाना[5] पृथिव्यामाशा दिशऽ-आपृणे"त्यव्यथमाना त्वं पृथिव्यामाशा दिशो रसेनापूरयेत्येतत् ॥१२॥ अथैनामुद्यच्छति । "उत्थाय[6] बृहती भवे"त्युत्थाय हीमे लोका बृहन्तऽ"उदु[7] तिष्ठ ध्रुवा त्वमि"त्युदु तिष्ठ स्थिरा त्वं प्रतिष्ठि-तेत्येतत् ॥१३॥ तां परिगृह्य निदधाति । "मित्रैतां[8] तऽउखां परिद-दाम्यभित्याऽएषा मा भेदी"त्ययं वै वायुर्मित्रो योऽयं पवते तस्मा-ऽएवैनामेतत्परिददाति गुप्त्यै ते हेमे लोका[9] मित्रगुप्तास्तस्मादेषाँल्लो-कानां न किञ्चन मीयते[10] ॥१४॥ अथैनामाच्छृणत्ति[11] । स्थेम्ने न्वेवा-थो कर्म्मणः प्रकृततायै यद्वेवाच्छृणत्ति शिरऽएतद्यज्ञस्य यदुखा प्राणः पयः शीर्षंस्तत्प्राणं दधात्यथो योषा वाऽउखा योषायां त-त्पयो दधाति तस्माद्योषायां पयः ॥१५॥ अजायै पयसाच्छृणत्ति । प्रजापतेर्व्वै शोकादजा समभवत्प्रजापतिरग्निर्नो वाऽआत्मात्मानᳬं हिनस्त्यहिᳬंसायै यद्वेवाजायाऽअजा ह सर्व्वाऽओषधीरत्ति सर्व्वा-सामेवैनामेतदोषधीनाᳬं रसेनाच्छृणत्ति ॥१६॥ "वसवस्त्वाच्छृ-[12]न्दन्तु । गायत्रेण छन्दसाङ्गिरस्वद्रुद्रास्त्वाच्छृन्दन्तु त्रैष्टुभेन छन्दसा-ङ्गिरस्वदादित्यास्त्वाच्छृन्दन्तु जागतेन छन्दसाङ्गिरस्वद्विश्वे त्वा देवा वैश्वानराऽआच्छृन्दन्त्वानुष्टुभेन छन्दसाङ्गिरस्वदि"त्येताभिरे-वैनामेतद्देवताभिराच्छृणत्ति स वै यथाभिरेव देवताभिः करोति ता-

---

१. मित्रं इति. ग, च    २. मा. सं. ११. ६३    ३. सविता इति. घ.
४. पर्या इति. ग, घ.    ५. मा. सं. ११. ६३.    ६,७. मा. सं. ११.६४.
८. परिददामीति. घ.    ९. लोका इति. ग, घ.    १०. मीयते. इति. च
११. शृणोति इति. ख.    १२. मा. सं. ११. ६५.

भिर्द्रूपयति ताभिराच्छृणत्ति यो वाव कर्म्म करोति सऽएव तस्योपचारं व्वेद तस्माद्याभिरेव देवताभिः करोति ताभिर्द्रूपयति ताभिराच्छृणत्ति ॥१७॥ Cf. का. श. ८. ५. ४; तै. सं. ५. १. ७; मै. सं. ६. १. ८, कठ. सं. १९. ७; कपि. ३०. ५.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे षष्ठकाण्डे
चतुर्थप्रपाठके द्वितीयं ब्राह्मणम् ॥ (अ.५.४.)

( इति पञ्चमोऽध्यायः )

६. ४. ३.

( दीक्षणीयेष्टिः औद्ग्रहणहोमाश्च )

भूयाꣳसि हवीꣳषि भवन्ति । अग्निचित्यायां य्यदु चानग्निचित्यायामतीनि ह कर्म्माणि सन्ति य्यान्यन्यत्कर्म्मातिं तान्यतीनि तेषामग्निचित्या राजसूयो व्वाजपेयोऽश्वमेधस्तद्यत्तान्यन्यानि कर्म्माण्यति तस्मात्तान्यतीनि ॥१॥ आग्नावैष्णवऽएकादशकपालः । तदध्वरस्य दीक्षणीयं व्वैश्वानरो द्वादशकपालऽआदित्यश्च चरुस्तेऽअग्नेः[१] ॥२॥ स य्यदाग्नावैष्णवमेव निर्व्वपेत् । नेतरे हविषीऽअध्वरस्यैव दीक्षणीयं कृतꣳस्यान्नाग्नेरथ य्यादितरेऽएव हविषी निर्व्वपेन्नाग्नावैष्णवमग्नेरेव दीक्षणीयं कृतꣳस्यान्नाध्वरस्य ॥३॥ उभयानि निर्व्वपति । अध्वरस्य चाग्नेश्चोभयꣳह्येतत्कर्म्माध्वरकर्म्म चाग्निकर्म्म चाध्वरस्य पूर्व्वमथाग्नेरुपाप्ति ह्येतत्कर्म्म[२] य्यदग्निकर्म्म ॥४॥ स य्यऽएषऽआग्नावैष्णवः । तस्य तदेव ब्राह्मणं य्यत्पुरश्चरणे व्वैश्वानरो द्वादशकपालो व्वैश्वानरो वै सर्व्वेऽग्नयः सर्व्वेषामग्नीनामुपाप्त्यै द्वादशकपालो द्वादश मासाः संवत्सरः संवत्सरो व्वैश्वानरः[३] ॥५॥ य्यद्वेवैतं व्वैश्वानरं निर्व्वपति । व्वैश्वानरं व्वाऽएतमग्निं जनयिष्यन्भवति तमेतत्पुरस्ताद्दीक्षणीयायाꣳरेतो भूतꣳसिञ्चति य्याद्दग्वै य्योनौ रेतः सिच्यते ता-

१. अग्नेरिति. घ. २. कर्म इति. घ. ३. वैश्वानर इति. ग, घ

ज्जायते तद्यदेतमत्र वैश्वानरꣳरेतो भूतꣳ सिञ्चति तस्मादेषोऽमुत्र
वैश्वानरो जायते ॥६॥ यद्वेवैते हविषी निर्व्वपति । क्षत्रं वै वैश्वा-
नरो विडेषऽआदित्यश्चरुः क्षत्रञ्च तद्विशञ्च करोति वैश्वानरं पूर्व्वं
निर्व्वपति क्षत्रं तत्कृत्वा विशं करोति ॥७॥ एकऽएष भवति । ए-
कदेवत्यऽएकस्थं तत्क्षत्रमेकस्थाꣳश्रियं करोति चरुरितरो बहुदेवत्यो
भूमा वाऽएष तण्डुलानां यच्चरुर्भूमोऽएष देवानां यदादित्या विशि
भूमानं दधातीत्याधिदेवतम् ॥८॥ अथाध्यात्मꣳ । शिरऽएव वै-
श्वानरऽआत्मैषऽआदित्यश्चरुः शिरश्च तदात्मानं च करोति वै-
श्वानरं पूर्व्वं निर्व्वपति शिरस्तत्कृत्वात्मानं करोति ॥९॥ एकऽएष भव-
ति । एकमिव हि शिरश्चरुरितरो बहुदेवत्यो भूमा वाऽएष तण्डुलानां
यच्चरुर्भूमोऽएषोऽङ्गानां यदात्मात्मंस्तदङ्गानां भूमानं दधाति ॥१०॥
तऽएष भवति । घृतभाजना ह्यादित्याः स्वेनैवैनानेतद्भागेन स्वेन
रसेन प्रीणात्युपाꣳश्वेतानि हवीꣳषि भवन्ति रेतो वाऽअत्र यज्ञ-
उपाꣳशु वै रेतः सिच्यते ॥११॥ अथौद्ग्रभणानि जुहोति । औद्ग्र-
भणैर्व्वै देवाऽआत्मानमस्माल्लोकात्स्वर्गंल्लोकमभ्युदगृह्णत यदुदगृह्णत
तस्मादौद्ग्रभणानि तथैवैतद्यजमानऽऔद्ग्रभणैरेवात्मानमस्माल्लो-
कात्स्वर्गंल्लोकमभ्युद्गृह्णीते ॥१२॥ तानि वै भूयाꣳसि भवन्ति ।
अग्निचित्यायां यदु चानग्निचित्यायां तस्योक्तो बंधुरुभयानि भवन्ति
तस्योक्तोऽध्वरस्य पूर्व्वाण्यथाग्नेस्तस्योऽएवोक्तः ॥१३॥ पञ्चाध्वरस्य
जुहोति । पाङ्क्तो यज्ञो यावान्यज्ञो यावत्यस्य मात्रा तावतैवैनमेत-
द्रेतो भूतꣳ सिञ्चति सप्ताग्नेः सप्तचितिकोऽग्निः सप्तर्त्तवः संवत्सरः
संवत्सरोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतद्रेतो भूतꣳ
सिञ्चति तान्युभयानि द्वादश सम्पद्यन्ते द्वादशमासाः संवत्सरः
संवत्सरोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावत्तद्भवति ॥१४॥

१. देवतम् इति. घ. २. ध्यात्मꣳ इति. च. ३. तदात्मानमिति. ग, घ.
४. करोति इति. घ. ५. सिच्यते इति. च. ६. वोक्त इति. घ.

स जुहोति । "आकूतिमग्निं प्रयुजᳫं स्वाहे"त्याकूताद्वाऽएतदग्रे कर्म्म समभवत्तदेवैतदेतस्मै कर्म्मणे प्रयुङ्क्ते ॥१५॥ "मनो मेधामग्निं प्रयुजᳫं स्वाहे"ति । मनसो वाऽएतदग्रे कर्म्म समभवत्तदेवैतदेतस्मै कर्म्मणे प्रयुङ्क्ते ॥१६॥ "चित्तं विज्ञातमग्निं प्रयुजᳫं स्वाहे"ति । चित्ताद्वाऽएतदग्रे कर्म समभवत्तदेवैतदेतस्मै कर्म्मणे प्रयुङ्क्ते ॥१७॥ "वाचो विधृतिमग्निं प्रयुजᳫं स्वाहे"ति । वाचो वाऽएतदग्रे कर्म्म समभवत्तामेवैतदेतस्मै कर्मणे प्रयुङ्क्ते ॥१८॥ "प्रजापतये मनवे स्वाहे"ति । प्रजापतिर्वै मनुः स हीदᳫं सर्व्वममनुत प्रजापतिर्वाऽएतदग्रे कर्म्माकरोत्तमेवैतदेतस्मै कर्म्मणे प्रयुङ्क्ते ॥१९॥ "अग्नये वैश्वानराय स्वाहे"ति । संवत्सरो वाऽअग्निर्वैश्वानरः संवत्सरो वाऽएतदग्रे कर्म्माकरोत्तमेवैतदेतस्मै कर्म्मणे प्रयुङ्क्ते ॥२०॥ अथ सावित्रीं जुहोति । सविता वाऽएतदग्रे कर्म्माकरोत्तमेवैतदेतस्मै कर्म्मणे प्रयुङ्क्ते "विश्वो देवस्य नेतुर्म्मर्त्तो वुरीत सख्यम् । विश्वो रायऽइषुध्यति द्युम्नं वृणीत पुष्यसे स्वाहे"ति यो देवस्य सवितुः सख्यं वृणीते स द्युम्नञ्च पुष्टिञ्च वृणीतऽएष वाऽअस्य सख्यं वृणीते यऽएतत्कर्म्म करोति ॥२१॥ तान्यु हैके । उखायामेवैतान्यौद्ग्रभणानि जुह्वति कामेभ्यो वाऽएतानि हूयन्तऽआत्मोऽएष यजमानस्य यदुखात्मन्यजमानस्य सर्व्वान् कामान् प्रतिष्ठापयामऽइति न तथा कुर्य्यादेतस्य वै यज्ञस्य सᳫंस्थितस्यैतासामाहुतीनां यो रसस्तदेतदर्च्चिर्यद्दीप्यते तद्यत्सᳫंस्थिते यज्ञे हुतेष्वौद्ग्रभणेषूखां प्रवृणक्ति तदेनामेष यज्ञऽआरोहति तं यज्ञं बिभर्त्ति तस्मात्सᳫंस्थितऽएव यज्ञे हुतेष्वौद्ग्रभणेषूखां प्रवृञ्ज्यात् ॥२२॥

( अर्द्धप्रपाठकः )

मुञ्जकुलायेनावस्तीर्णा भवति । आदीप्यादिति न्वेव यद्वेव मु-

---

१-४, ६. मा. सं. ११. ६६. ५. ममनुत इति. घ.
७. एतदिति. घ. ८. मा. सं. ११. ६७.

अकुलायेन य्योनिरेषाग्नेर्यन्मुञ्जो न वै य्योनिर्गर्भᳩ हिनस्त्यहिᳩसायै य्योनेर्व्वै जायमानो जायते य्योनेर्ज्जायमानो जायाताऽइति ॥२३॥ शणकुलायमन्तरं भवति । आदीप्यादिति न्वेव य्यद्वेव शणकुलायं प्रजापतिर्य्यस्यै य्योनेरसृज्यत तस्याऽउमाऽउल्बमासञ्छणा जरायु तस्मात्ते पूतयो जरायु हि तेन वै जरायु गर्भᳩ हिनस्त्यहिᳩसायै जरायुणो वै जायमानो जायते जरायुणो जायमानो जायाता ऽइति ॥२४॥ Cf. का. श. ८. ६. १; तै. सं. ५. १. ९; मै. सं. ३. १. ९; क. सं. १९. ९; कपि. ३०. ७; ८.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे षष्ठकाण्डे
चतुर्थप्रपाठके तृतीयं ब्राह्मणम् ॥ (अ. ६. १.)

## ६. ४. ४.

## ( उखासन्तपनम् )

तां तिष्ठन् प्रवृणक्ति । इमे वै लोकाऽउखा तिष्ठन्तीव वा ऽइमे लोकाऽअथो तिष्ठन्वै व्वीर्यवत्तरः ॥१॥ उदङ् प्राङ्तिष्ठन् । उदङ्वै प्राङ् तिष्ठन्प्रजापतिः प्रजा[3] असृजत ॥२॥ य्यद्वेवोदङ् प्राङ्तिष्ठन् । एषा ह्योभयेषां देवमनुष्याणां दिग्यदुदीची प्राची ॥३॥ य्यद्वेवोदङ् प्राङ्तिष्ठन् । एतस्याᳩ ह दिशि स्वर्गस्य लोकस्य द्वारं तस्मादुदङ् प्राङ्तिष्ठन्नाहुतीर्ज्जुहोत्युदङ् प्राङ् तिष्ठन्दक्षिणा नयति द्वारैव तत्स्वर्गस्य लोकस्य व्वित्तं प्रपादयति ॥४॥ "मा सु भित्था मा सु रिष" ऽइति । य्यथैव य्यजुस्तथा बन्धुर"म्ब धृष्णु व्वीरयस्व स्वि"ति य्योषा वा ऽउखाम्बेति वै य्योषायाऽआमन्त्रणᳩ स्विव व्वीरयस्वाग्निश्चेदं करिष्यथ" ऽइत्यग्निश्च ह्येतत्करिष्यन्तौ भवतः ॥५॥ "दृᳩहस्व देवि पृथिवि स्वस्तय"ऽइति । य्यथैव य्यजुस्तथा बन्धुरा-

१. योनिरेखाग्ने रति क.  २. वीर्यवत्तम इति. च.

३. प्रजा इति. ग, घ.  ४-७. मा. सं ११. ६८.

"सुरी माया स्वधया कृतासी"ति प्राणो वाऽअसुस्तस्यैषा माया स्वधया कृता "जुष्टं देवेभ्यऽइदमस्तु हव्य"मिति य्याऽएवैतास्मिन्नग्नावाहुतीर्होष्यन्भवति ताऽएतदाहाथो ऽएषैव हव्यम् "रिष्टा त्वमुदिहि य्यज्ञेऽअस्मि"न्निति य्यथैवारिष्टानांत्वैतस्मिन्यज्ञऽउदियादेवमेतदाह ॥६॥ द्वाभ्यां प्रवृणक्ति । द्विपाद्यजमानो य्यजमानो ऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनामेतत्प्रवृणक्ति गायत्र्या च त्रिष्टुभा च प्राणो गायत्र्यात्मा त्रिष्टुबेतावान्वै पशुर्य्यावान्प्राणश्चात्मा च तद्यावान्पशुस्तावतैवैनामेतत्प्रवृणक्त्यथोऽअग्निर्वै गायत्रीन्द्राग्निष्टुबैन्द्राग्नोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनामेतत्प्रवृणक्तीन्द्राग्नी वै सर्व्वे देवाः सर्व्वदेवत्योग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनामेतत्प्रवृणक्ति तयोः सप्त पदानि सप्तचितिकोऽग्निः सप्तर्त्तवः संवत्सरः संवत्सरोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावत्तद्भवति ॥७॥ तां य्यदाग्निः सन्तपति । अथैनामर्च्चिरारोहति य्योषा वाऽउखा वृषाग्निस्तस्माद्यदा वृषा य्योषाᳬ सन्तपत्यथास्याᳬरेतो दधाति ॥ ८ ॥ तद्धैके । य्यदि चिरमर्च्चिरारोहत्यङ्गारानेवावपत्युभयेनैषोऽग्निरिति न तथा कुर्यादस्थन्वान्वाव पशुर्जायतेऽथ तन्नाग्रऽएवास्थन्वन्तमिव न्यूषन्ति रेतऽइवैव दधति रेतऽउऽएतदनस्थिकं य्यदर्च्चिस्तस्मादेनामर्च्चिरेवारोहेत् ॥९॥ तां य्यदार्च्चिरारोहति । अथास्मिन्त्समिधमादधाति रेतो वाऽएनामेतदापद्यत ऽएषोऽग्निस्तस्मिन्नेताᳬ रेतसि सम्भूतिं दधाति ॥१०॥ सा कार्मुकी स्यात् । देवाश्चासुराश्चोभये प्राजापत्या ऽअस्पर्द्धन्त ते देवाऽ अग्निमनीकं कृत्वासुरानभ्यायंस्तस्यार्च्चिषः प्रगृहीतस्यासुराऽअग्रं प्रावृश्चंस्तदस्यां प्रत्यतिष्ठत्स कृमुकोऽभवत्तस्मात्स स्वादू रसो हि तस्मादु लोहितोऽर्च्चिर्हि सऽएषोऽग्निरेव य्यत्कृमुको ऽग्निमेवास्मिन्नेतत्सम्भूतिं दधाति ॥११॥ प्रादेशमात्री भवति । प्रादेशमात्रो वै गर्भो विष्णुरात्मसम्मिता-

१-३. मा. सं. ११. ६९. ४. यथैव इति. घ. ५. नेवाव इति. घ.
६. एषो इति. घ. ७. श्चोभये इति. घ. ८. विष्णुरात्मसंमितामेव इति. घ.

मेवास्मिन्नेतत्सम्भूतिं दधाति ॥१२॥ घृते न्युप्ता भवति । अग्निर्यस्यै योनेरसृज्यत तस्यै घृतमुल्बमासीत्तस्मात्तत्प्रत्युद्दीप्यत ऽआत्मा ह्यस्यैष तस्मात्तस्य न भस्म भवत्यात्मैव तदात्मानमप्येति न वाऽउल्बं गर्भᳬं हिनस्त्यहिᳬंसाया ऽउल्बाद्धि जायमानो जायत ऽउल्बाज्जायमानो जायाताऽइति ॥१३॥ तामादधाति । "द्रवन्नः सर्पिरासुति" रिति[3] द्राव्वन्नः सर्पिरशनऽइत्येत"त्प्रत्नो होता व्वरेण्य"[4]ऽइति सनातनो होता व्वरेण्य ऽइत्येतत्स "हसस्पुत्रो ऽअद्भुत"[5]ऽइति बलं वै सहो बलस्य पुत्रो[6]ऽद्भुत ऽइत्येतत्त्रिष्टुब्भादधाति स्वाहाकारेण तस्योपरि बंधुः ॥१४॥ तद्वाऽआत्मैवोखा । योनिर्मुञ्जाः[7] शणा जरायूल्वं घृतं गर्भः समित् ॥१५॥ बाह्योखा भवति । अन्तरे मुञ्जा बाह्यो ह्यात्मान्तरा योनिर्बाह्ये मुञ्जा भवन्त्यन्तरे शणा बाह्या हि योनिरन्तरं जरायु बाह्ये शणा भवन्त्यन्तरं घृतं बाह्यᳬं हि जरायुवन्तरमुल्वं बाह्यं घृतं भवत्यन्तरा सामद्बाह्यᳬं ह्युल्बमन्तरो गर्भऽएतेभ्यो वै जायमानो जायते[8] तेभ्य ऽएवैनमेतज्जनयति ॥१६॥ Cf. का. श. ८. ६. ५; तै. सं. ५. १. ९; मै. ३. १. १०; कठ. सं. १९. १०; कपि. ३०. ८.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे षष्ठकाण्डे
चतुर्थप्रपाठके चतुर्थं ब्राह्मणम् ॥ (अ. ६. २.)

## ६. ४. ५.
## ( समिदाधानम् )

अथ व्वैकङ्कतीमादधाति । प्रजापतिर्य्यां प्रथमामाहुतिमजुहोत्स हुत्वा यत्र न्यमृष्ट ततो व्विकङ्कतः समभवत्सैषा प्रथमाहुतिर्यद्विकङ्कतस्तामस्मिन्नेतज्जुहोति तयैनमेतत्प्रीणाति "परस्याऽअधि संव्वतोऽवराँ २॥ऽअभ्यातर[10] । यत्राहमस्मि ताँ२॥ऽअवे"[9]ति यथैव यथ-

१. आदधाति इति. च.　२. मा. सं. ११. ७०.　३. दावन्न इति घ.
४, ५. मा. सं. ११. ७०.　६. पुत्रो इति घ.　७. मुञ्जा इति. ग, घ.
८. जायते इति. घ.　९. मा. सं. ११. ७१.　१०. अभ्यातर इति. घ.

जुस्तथा बंधुः ॥१॥ अथौदुम्बरीमादधाति । देवाश्चासुराश्चोभये प्राजापत्याऽअस्पर्द्धन्त ते ह सर्व्वऽएव व्वनस्पतयोऽसुरानभ्युपेयुरुदुम्बरो हैव देवान्न जहौ ते देवाऽअसुराञ्जित्वा तेषां व्वनस्पतीनवृञ्जत ॥२॥ ते होचुः । हन्त य्यैषु व्वनस्पतिषूर्ग्यो रसऽ उदुम्बरे तन्दधाम ते य्यद्यपक्रामेयुर्यातयामाऽअपक्रामेयुर्यथा धेनुर्दुग्धा य्यथानड्वानूढिवानिति तद्यैषु व्वनस्पतिषूर्ग्यो रसऽआसीदुदुम्बरे तमदधुस्तयैतदूर्ज्जा सर्व्वान्व्वनस्पतीन्प्रति पच्यते तस्मात्स[2] सर्व्वदार्द्रः सर्व्वदा क्षीरी तदेतत्सर्व्वमन्नं य्यदुदुम्बरः सर्व्वे व्वनस्पतयः सर्व्वेणैवैनमेतदन्नेन प्रीणाति सर्व्वैर्व्वनस्पतिभिः समिन्धे ॥३॥ "[3]परमस्याः परावत"ऽइति । य्या परमा परावदित्येत"द्रोहिदश्वऽइहागही"ति रोहितो ह्यग्नेरश्वः "पुरीष्यः पुरुप्रिय"ऽइति पशव्यो बहुप्रियऽइत्येतद"ग्ने त्वं तरामृध"ऽइत्यग्ने त्वं तर सर्व्वान्पाप्मनऽ इत्येतत् ॥४॥ अथापरशुवृक्णमादधाति । जायतऽएव ऽएतद्यच्चीयते स ऽएष सर्व्वस्माऽअन्नाय जायतऽएतद्वैकमन्नं य्यदपरशुवृक्णं तेनैनमेतत्प्रीणाति "[7]य्यदग्ने कानि कानि चिदा ते दारूणि दध्मसि । सर्व्वं तदस्तु ते घृतं तज्जुषस्व यविष्ठ्ये"ति य्यथैव य्यजुस्तथा बधुस्तद्यत्किञ्चापरशुवृक्णं तदस्माऽएतत्स्वदयति तदस्माऽअन्नं कृत्वापिदधाति ॥५॥ अथाधःशयमादधाति । जायतऽएष ऽएतद्यच्चीयते स ऽएष सर्व्वस्माऽअन्नाय जायतऽएतद्वैकमन्नं य्यदधः शयं तेनैनमेतत्प्रीणाति "[8]यदत्त्युपजिह्विका य्यद्वम्रोऽअतिसर्पती"त्युपजिह्विका वाहि तदत्ति व्वम्रो वातिसर्पति "[9]सर्व्वं तदस्तुते घृतं तज्जुषस्व [10]यविष्ठ्ये[11]ति य्यथैव य्यजुस्तथा बन्धुस्तद्यत्किञ्चाधः शयं तदस्मा[11]ऽएतत्स्वदयति तदस्माऽअन्नं कृत्वापिद[12]धाति ॥६॥ अथैताऽउत्तराः पालाश्यो भव-

---

१. प्रतिपद्यत इति. च, ङ. २. तस्मात्स इति. घ. ३-६. मा. सं. ११. ७२.
७. मा. सं. ११.७३. ८, ९. मा. सं. ११. ७४.
१०. ष्ठयेति इति. घ. ११. तदस्वा इति. ग, घ. १२. अपिदधाति इति. च.

ति । ब्रह्म वै पलाशो ब्रह्मणैवैनमेतत्समिन्धे यद्वेव पालाश्यः सो-
ो वै पलाशऽएषो ह परमाहुतिर्यत्सोमाहुतिस्तामस्मिन्नेतज्जुहोति
यैनमेतत्प्रीणाति[1] ॥७॥ "[2]अहरहरप्रयावं भरन्तऽ"इति । अहरहर-
मत्ताऽआहरन्त ऽइत्येतद् "[3]अश्वायेव तिष्ठते घासमस्मा"ऽइति यथा-
वाय तिष्ठते घासमित्येतद्"[4]रायस्पोषेण समिषा मदन्त"ऽइति रय्या
। पोषेण च समिषा मदन्तऽइत्येत "[5]दग्ने मा ते प्रतिवेशा रिषा-
"ति यथैवास्य प्रतिवेशो न रिष्येदेवमेतदाह ॥८॥ "[6]नाभा पृथि-
याः समिधानेऽअग्ना"विति । एषा ह नाभिः पृथिव्यै यत्रैषऽएत-
त्समिध्यते "[7]रायस्पोषाय बृहते हवामह"ऽइति रय्यै च पोषाय च
हते हवामहऽइत्येतदि"[8]रम्मदमि"तीरम्मदो ह्येष मत्तो "[9]बृहदुकथ"मिति
हदुकथो ह्येष "[10]यजत्र"मिति यज्ञियमित्येत"ज्जे[11]तारमग्निं पृतनासु-
सासहि"मिति जेता ह्यग्निः[12] पृतनाऽउ सासहिः[13] ॥९॥ "[14]याः सेनाऽअ-
भीत्वरीः । दंष्ट्राभ्यां मलिम्लूनग्ने जनेषु मलिम्लवो योऽअस्मभ्य-
मरातीयाद्यश्च नो द्वेषते जनः । निन्दाद्योऽअस्मान्धिप्साच्च सर्व्वं
[15] भस्मसा कुर्व्वि"ति ॥१०॥ एतद्वै देवाः । यश्चैनानद्वेद्य[16]-
श्चाद्विषुस्तमस्माऽअन्नं कृत्वाप्यदधुस्तेनैनमप्रीणन्नन्नमहैतस्या भव-
दहद्उ देवानां पाप्मानं तथैवैतद्यजमानो यश्चैनं द्वेष्टि यश्च
ष्टि तमस्माऽअन्नं कृत्वापिदधाति तेनैनं प्रीणात्यन्नमहैतस्य
भवति दहत्यु यजमानस्य पाप्मानम् ॥११॥ ताऽएताऽएकादशा-
[17]धाति । अक्षत्रियस्य वा पुरोहितस्य वा सर्व्वं वै तद्यदेकादश सर्व्वं
यदक्षत्रियो वा पुरोहितो वा ॥१२॥ द्वादश क्षत्रियस्य वा पुरोहि-
तस्य वा । सर्व्वं वै तद्यद्द्वादश सर्व्वं तद्यत्क्षत्रियो वा पुरोहितो वा ॥१३॥

---

१. प्रीणाति इति. च.  २–५. मा. सं. ११. ७५.  ६–१०. मा सं. ११. ७६.

११. जेतारमिति ग.  १२. ह्यग्निरिति. ग, घ.  १३. सासहिः इति. घ.

१४. मा. सं. ११. ७७–८०.  १५. त इति. घ.

१६. नद्वेयं इति. घ, नद्वेद्यमिति. ग.  १७. दधाति इति. च.

स पुरोहितस्यादधाति । संꣳशितं मे ब्रह्म सꣳ शितं वीर्य्यं बलम् । सꣳशितं क्षत्रं जिष्णु यस्याहमस्मि पुरोहित"ऽइति तद-स्य ब्रह्म च क्षत्रं च संꣳश्यति ॥१४॥ अथ क्षत्रियस्य । "उदेषां बाहूऽअतिरमुद्वर्च्चोऽअथो बलम् । क्षिणोमि ब्रह्मणामित्रानुन्नयामि स्वाँ २॥ऽअह"मिति यथैव क्षिणुयादमित्रानुन्नयेत्स्वानेवमेतदाहोभे त्वेवैतेऽआदध्यादयं वाऽअग्निर्ब्रह्म च क्षत्रं चेममेवैतदग्निमेताभ्यामु-भाभ्याꣳसमिन्धे ब्रह्मणा च क्षत्रेण च ॥१५॥ तास्त्रयोदश सम्प-द्यन्ते । त्रयोदश मासाः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्या-वत्यस्य मात्रा तावतैवैनमेतदन्नेन प्रीणाति ॥१६॥ प्रादेशमात्र्यो भवन्ति । प्रादेशमात्रो वै गर्भो विष्णुरन्नमेतदात्मसंमितेनैवैन-मेतदन्नेन प्रीणाति यदु वाऽआत्मसम्मितमन्नं तदवति तन्न हिन-स्ति यद्भूयो हिनस्ति तद्यत्कनीयो न तदवति तिष्ठन्नादधाति तस्योपरि बन्धुः स्वाहाकारेण रेतो वाऽइदꣳ सिक्तमयमग्निस्तस्मिन् यत्काष्ठान्यस्वाहाकृतान्यभ्यादध्याद्धिꣳस्याद्धैनं ता यत्समिधस्तेन नाहुतयो यदु स्वाहाकारेण तेनान्नमन्नꣳहि स्वाहाकारस्तथो हैनं न हिनस्ति ॥ १६ ॥ Cf. का. श. ८. ६. ३; मै. सं. ३. १. ९; काठ. १९. १०; कपि. ३०. ८.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे षष्ठकाण्डे
चतुर्थप्रपाठके पञ्चमं ब्राह्मणम् ॥ (अ. ६. ३.)

६. ४. ६.

( भस्मोद्वपनादि )

अथ विष्णुक्रमान्क्रात्वा । वात्सप्रेणोपस्थायास्तमितऽआदित्ये भस्मैव प्रथममुद्वपत्येतद्वाऽएनमेतेनान्नेन प्राणीत्येताभिः समिद्भिस्त-

१. मा. सं. ११. ८१. २. संꣳ यति इति. च.

३. क्षत्रियस्य. उदेषां इति. ग, घ. ४. मा. सं ११. ८२.

ान्नस्य जग्धस्यैष पाप्मा सीदति भस्म तेनैनमेतद्व्यार्त्तयति त-
न्नपहतपाप्मन्वाचं व्विसृजते व्वाचं विसृज्य समिधमादधाति
्याऽएवैनमेतदन्नेन प्रीणाति रात्रीꣳरात्रीमप्रयावं भरन्तऽइति
ःयोक्तो बन्धू रात्र्याऽएवैतामरिष्टिꣳ स्वस्तिमाशास्ते तद्यत्किं
तो रात्र्योपसमादधात्याहुतिकृतꣳ हैवास्मै तदुपसमादधाति[1] ॥१॥
थ प्रातरुदितऽआदित्ये । भस्मैव प्रथममुद्धपत्येतद्वाऽएनमेतेना-
न प्रीणात्येतया समिधा य्यच्च रात्र्योपसमादधाति तस्यान्नस्य
धस्यैष पाप्मा सीदति भस्म तेनैनमेतद्व्यार्त्तयति तस्मिन्नपहतपाप्म-
ाचं व्विसृजते व्वाचं व्विसृज्य समिधमादधात्यह्नऽएवैनमेतदन्नेन
णात्यहरहरप्रयावं भरन्तऽइति तस्योक्तो बंधुरह्नऽएवैताम-
ष्टिꣳस्वस्तिमाशास्ते तद्यत्किञ्चातोऽह्नोपसमादधात्याहुतिकृतꣳ
ास्मै तदुपसमादधाति ॥ २ ॥ अहोरात्रे वाऽअभिवर्त्तमाने ।
वत्सरमाप्नुतः संवत्सरऽइदꣳ सर्व्वमाह्नायैवैतामरिष्टिꣳ
स्तिमाशास्ते[2] ॥३॥ अथ य्यदास्मै व्व्रतं प्रयच्छन्ति । अथ
ते न्यज्य समिधमादधाति न व्व्रते न्यञ्ज्यादित्यु हैकऽआहुरा-
तं तज्जुहुयादनवक्लृप्तं वै तद्यदीक्षित ऽआहुतिं जुहुयादिति ॥४॥
वै न्यञ्ज्यादेव । दैवो वाऽअस्यैषऽआत्मा मानुषो[3]ऽयꣳ स यन्न [4]न्य-
यान्न हैतं दैवमात्मानं प्रीणीयादथ य्यन्न्यनक्ति तथा हैतं दैवमा-
ानं प्रीणाति सा य्यत्समित्तेन नाहुतिर्य्यदु व्व्रते न्यक्ता तेनान्नमन्नꣳ
व्रतम् ॥५॥ स वै समिधमाधायाथ व्व्रतयति । दैवो वा[5]ऽअ-
षऽआत्मा मानुषोऽयं देवाऽउ वाऽअग्रेऽथ मनुष्यास्तस्मात्समिध-
धायाथ व्व्रतयति[6] ॥६॥ "अन्न[7]पतेऽन्नस्य नो देही"ति । अश-

---

१. दधाति इति. च. २. माशास्ते इति. च. ३. मामुषी इति. घ.
४. न्यञ्ज्याच्च इति. ग. घ. ५. वा इति. ग, घ. ६. व्रतयति इति. च.
७. मा. सं. ११. ८३.

नपतेऽशनस्य नो [1]देहीत्येतद् "नमीवस्य शुष्मिण" ऽइत्यनशनायस्य शुष्मिणऽइत्येत "[4]प्रप्रदातारं तारिष" ऽइति यजमानो वै दाता प्रयजमानं तारिषऽइत्येतदूर्ज्जं नो धेहि द्विपदे चतुष्पदऽइत्याशिषमाशास्ते यदु भिन्नायै प्रायश्चित्तिमाहोत्तरस्मिंस्तदनुव्याख्यानऽइति ॥७॥ यद्येषोखा भिद्येत । याभिन्ना न वा स्थाल्युरुबिली स्यात्तस्यामेनं पर्य्यावपेद्वार्च्छति वाऽएषोखा या भिद्यतेऽनार्त्तोऽइयं देवतानार्त्तायामिमनार्त्तं बिभराणीति तत्रोखायै कपालं पुरस्तात्प्रास्यति तथो हैषऽएतस्यै स्वायै योनेर्न [5]च्यवते ॥८॥ अथ मृदमाहृत्य । उखां चोपशयां च पिष्ट्वा सꣳसृज्योखां करोत्येतयैवावृतानुपहरन्यजुस्तूष्णीमेव पक्त्वा पर्य्यावपति [6]कर्मणिरेव तत्र प्रायश्चित्तिःपुनस्तत्कपालमुखायामुपसमस्योखां चोपशयां च पिष्ट्वा सꣳसृज्य निदधाति [7]प्रायश्चित्तिभ्यः ॥९॥ अथ यद्येषऽउख्योऽग्निरनुगच्छेत् । गार्हपत्यं वाव स गच्छति गार्हपत्याद्धि स ऽआहृतो भवति गार्हपत्यादेवैनं प्राञ्चमुद्धृत्योपसमाधायोखां प्रवञ्ज्यादेतयैवावृतानुपहरन्यजुस्तूष्णीमेव तां यदाग्निरा[8]रोहति ॥१०॥ अथ प्रायश्चित्ती करोति । सर्व्वेभ्यो वाऽएषऽएतं कामेभ्यऽआधत्ते तद्यदेवास्यात्र कामानां व्यवच्छिद्यतेऽग्नावनुगते तदेवैतत्संतनोति सन्दधात्युभे प्रायश्चित्ती करोत्यध्वरप्रायश्चित्तिं चाग्निप्रायश्चित्तिं चाध्वरस्य पूर्व्वामथाग्नेस्तस्योक्तो बन्धुः ॥११॥ स समिधाज्यस्योपहृत्य । आसीनऽआहुतिं जुहोति "[9]विश्वकर्मणे स्वाहे" त्यथोपोत्थाय समिधमादधाति "[10]पुनस्त्वादित्या रुद्रा वसवः समिन्धतां पुनर्ब्रह्माणो वसुनीथ यज्ञै" रित्येतास्त्वा देवताः पुनः समिन्धतामित्येतद् "घृतेन [12]त्वं

१ देहीति. इति. घ, देहीति, इति. च. २, ३ मा. सं. ११. ८३.

४. प्रप्रदातारमिति. घ. ५. च्यवते इति च. ६. कर्मणिरेव इति. च.

७. प्रायश्चित्तिभ्य इति. च. ८. आरोहति इति. च.

९. उपहृत्य । आसीन इति. ग, घ. १०-१२. मा. सं. १२. ४४.

न्वंवर्द्धयस्व सत्याः सन्तु यजमानस्य कामा''ऽइति घृतेनाह
यं तन्वंवर्द्धयस्व येभ्यऽउ त्वां कामेभ्यो यजमान आधत्त तेऽस्य
एवं सत्याः सन्त्वित्येतत् ॥१२॥ अथ यदि गार्हपत्योऽनुगच्छेत् ।
रणी वाव स गच्छत्यरणिभ्याꣳहि सऽआहृतो भवत्यरणिभ्यामे-
नं मथित्वोपसमाधाय प्रायश्चित्ती करोति[2] ॥१३॥ अथ यदि प्राङु-
ऽआहवनीयोऽनुगच्छेत्[3] । गार्हपत्यं वाव स गच्छति गार्हपत्याद्धि
ऽआहृतो भवति गार्हपत्यादेवैनं प्राञ्चꣳसाङ्काशिनेन हृत्वोपसमा-
ाय प्रायश्चित्ती करोति यस्तस्मिन्काले ऽध्वरः स्यात्तामध्वरप्राय-
श्चित्तिंकुर्य्यात्समान्यग्निप्रायाश्चित्तिः ॥१४॥ अथ यद्याग्नीध्रीयोऽनु-
च्छेत् । गार्हपत्यं वाव स गच्छति गार्हपत्याद्धि सऽआहृतो भवति
र्हपत्यादेवैनं प्राञ्चमुत्तरेण सदो हृत्वोपसमाधाय[4] प्रायश्चित्ती करो-
थ यदि गार्हपत्योऽनुगच्छेत्तस्योक्तो बन्धुः ॥१५॥ Cf. का. श.
६. ४; तै. सं. ५. २. २.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे षष्ठकाण्डे
चतुर्थप्रपाठके षष्ठं ब्राह्मणम् ॥ ( अ. ६. ४ )

( षष्ठोऽध्यायः )

इति चतुर्थः प्रपाठकस्समाप्तः ॥

( कण्डिकासंख्या १०० )

## अथ पञ्चमः प्रपाठकः ॥

### ६. ५. १.

( रुक्मप्रतिमोचनमुख्याग्निधारणं च )

ॐ रुक्मं प्रतिमुच्य बिभर्त्ति । सत्यꣳ हैतद्यद्रुक्मः सत्यं वा ऽएतं
तुमर्हति सत्येनैतं देवाऽअबिभरुः सत्येनैवैनमेतद्बिभर्त्ति ॥१॥ त-

१. वर्धयस्वेति. ग, घ. २. करोति इति. च. ३. अनुगच्छेदिति. घ.
४. हृत्वो इति. घ.

यत्तत्सत्यम् । असौ स ऽआदित्यः स हिरण्मयो भवति ज्योतिर्वै हिरण्यं ज्योतिरेषोऽमृतᳫं हिरण्यममृतमेष परिमण्डलो भवति परिमण्डलो ह्येष ऽएकविᳫंशतिनिर्बाध ऽएकविᳫंशो ह्येष बहिष्टान्निर्बाधं बिभर्त्ति रश्मयो वाऽएतस्य निर्बाधा बाह्यतऽउ वाऽएतस्य रश्मयः ॥२॥ य्यद्वेव रुक्मं प्रतिमुच्य बिभर्त्ति । असौ वाऽआदित्यऽएष रुक्मो नो हैतमग्निं मनुष्यो मनुष्यरूपेण य्यन्तुमर्हत्येतेनैव रूपेणैतद्रूपं बिभर्त्ति ॥३॥ य्यद्वेव रुक्मं प्रतिमुच्य बिभर्त्ति । रेतो वाऽइदᳫं सिक्तमयमग्निस्तेजो व्वीर्यᳫं रुक्मोऽस्मिंस्तद्रेतसि तेजो व्वीर्यन्दधाति ॥४॥ य्यद्वेव रुक्मं प्रतिमुच्य बिभर्त्ति । एतद्वै देवाऽअबिभयुर्यद्वै नऽइममिह रक्षाᳫंसि नाष्ट्रा न हन्युरिति तस्माऽएतमन्तिकाद्गोप्तारमकुर्व्वन्नमुमेवादित्यमसौ वाऽआदित्यऽएष रुक्मस्तथैवास्माऽअयमेतमन्तिकाद्गोप्तारङ्करोति ॥५॥ कृष्णाजिने निष्यूतो भवति । यज्ञो वै कृष्णाजिनं यज्ञो वाऽएतं य्यन्तुमर्हति यज्ञेनैतं देवाऽअबिभरुर्यज्ञेनैवैनमेतद्बिभर्त्ति लोमतश्छन्दाᳫंसि वै लोमानि छन्दाᳫंसि वाऽएतं य्यन्तुमर्हन्ति छन्दोभिरेतं देवाऽअबिभरुश्छन्दोभिरेवैनमेतद्बिभर्त्ति॥ ६ ॥ अभि शुक्लानि च कृष्णानि च लोमानि निष्यूतो भवति । ऋक्सामयोर्हैते रूपेऽऋक्सामे वाऽएतं य्यन्तुमर्हतऽऋक्सामाभ्यामेतं देवाऽअबिभरुर्ऋक्सामाभ्यामेवैनमेतद्बिभर्त्ति शाणो रुक्मपाशस्त्रिवृत्तस्योक्तो बंधुः॥७॥ तमुपरि नाभि बिभर्त्ति । असौ वाऽआदित्यऽएष रुक्मऽउपरि नाभ्यु वाऽएषः ॥८॥ ( शतम् ३८०० ) य्यद्वेवोपरिनाभि । अवाग्वै नाभे रेतः प्रजातिस्तेजो व्वीर्यᳫं रुक्मो नेन्मे रेतः प्रजातिं तेजो व्वीर्यᳫं रुक्मः प्रदहादिति ॥९॥ य्यद्वेवोपरिनाभि । एतद्वै पशोर्म्मेध्यतरं य्यदुपरिनाभि पुरीषसᳫंहिततरं यदवाङ्नाभेस्तद्यदेव पशोर्म्मेध्यतरं तेनैनमेतद्बिभर्त्ति ॥१०॥ य्यद्वेवोपरिनाभि । यद्वै प्राणस्यामृतमूर्द्ध्वं तन्नाभेरूर्द्ध्वैः प्राणैरुच्चरत्यथ यन्मर्त्यं पराङ्नाभिम-

ोति तद्यदेव प्राणस्यामृतं तदेनमेतदभिसम्पादयति तेनैनमेताद्बिभर्त्ति
११॥ अथैनमासन्द्या बिभर्त्ति । इयं वाऽआसन्द्यस्याᳫं हीदᳬं
र्व्वमासन्नमियं वाऽएतं य्यन्तुमर्हत्यनयैतं देवाऽअबिभरुरनयैवैनमे-
द्बिभर्त्ति॥१२॥ औदुम्बरी भवति । ऊर्ग्वै रसऽउदुम्बर ऽऊर्ज्जैवैन-
तद्रसेन बिभर्त्यथो सर्व्वे ऽएते व्वनस्पतयो य्यदुदुम्बरः सर्व्वे वा
एतं व्वनस्पतयो य्यन्तुमर्हन्ति सर्व्वैरेतं व्वनस्पतिभिर्देवाऽअबिभरुः
र्व्वैरेवैनमेतद्वनस्पतिभिर्बिभर्त्ति ॥१३॥ प्रादेशमात्र्यूर्द्ध्वा भवति ।
ादेशमात्रो वै गर्भो व्विष्णुर्य्योनिरेषा गर्भसम्मितां तद्योनिङ्करोत्य-
त्निमात्री तिरश्ची बाहुर्व्वाऽअरत्निर्बाहुनो वै व्वीर्यं क्रियते व्वीर्य-
म्मितैव तद्भवति व्वीर्यं वाऽएतं य्यन्तुमर्हति व्वीर्येणैतं देवाऽअ-
ाभरुर्व्वीर्येणैवैनमेताद्बिभर्त्ति ॥१४॥ चतुःस्रक्तयः पादा भवन्ति ।
ातुःस्रक्तीन्यनूच्यानि चतस्रो वै दिशो दिशो वाऽएतं य्यन्तुमर्हन्ति
िग्भिरेतं देवाऽअबिभरुर्दिग्भिरेवैनमेताद्बिभर्त्ति मौञ्जीभी रज्जुभि-
्युता भवति त्रिवृद्भिस्तस्योक्तो बन्धुर्मृदा दिग्धा तस्योऽएवोक्तो-
थोऽअनतिदाहार्य ॥१५॥ अथैनᳬं शिक्येन बिभर्त्ति । इमे वै लो-
ाऽएषोऽग्निर्द्दिशः शिक्यं दिग्भिर्हीमे लोकाः शक्नुवन्ति स्थातु
्रच्छक्नुवन्ति तस्माच्छिक्यं दिग्भिरेवैनमेताद्बिभर्त्ति षडुद्यामं भवति
ड्ढि दिशो मौञ्जं त्रिवृत्तस्योक्तो बन्धुर्मृदा दिग्धं तस्योऽएवोक्तो
थोऽअनतिदाहाय ॥१६॥ तस्यापऽएव प्रतिष्ठा । अप्सु हीमे लोकाः
तिष्ठिताऽआदित्यऽआसञ्जनमादित्ये हीमे लोका दिग्भिरासक्ताः
य्यो हैतदेवं व्वेदैतेनैव रूपेणैतद्रूपं बिभर्त्ति ॥१७॥ य्यद्वेवैनᳫं
ाक्येन बिभर्त्ति । संवत्सरऽएषोऽग्निर्ऋतवः शिक्यमृतुभिर्हि संव-
रः शक्नोति स्थातुं य्यच्छक्नोति तस्माच्छिक्यमृतुभिरेवैनमेत-

१. बिभर्ति इति.च. एवमग्रेऽपि  २. ऊर्वै इति. ग, घ.
३. वनस्पतिभिरिति. ग, घ.  ४. दाहाय इति. च. एवमग्रेऽपि ।
५. द्बिभर्ति इति. ग.घ.  ६. मृदा इति. घ.  ७. लोका इति. ग, घ.
८. मृतु इति. घ.

द्बिभर्त्ति षडुद्यामं भवति षड्ढ्यृतवः ॥१८॥ तस्याहोरात्रेऽएव प्रतिष्ठा[1] । अहोरात्रयोर्ह्ययᳫं संवत्सरः प्रतिष्ठितश्चन्द्रमाऽआसञ्जनं चन्द्रमसि ह्ययᳫं संवत्सरऽऋतुभिरासक्तः स य्यो हैतदेवं व्वेदै[2]तेनैव रूपेणैतद्रूपं बिभर्त्ति तस्य ह वाऽएष संवत्सरभृतो भवति य्यऽएवं व्वेद संवत्सरोपासितो हैव तस्य भवति य्यऽएवं न व्वेदेत्यधिदे[3]वतम् ॥१९॥

( ग्र[4]न्थस्याऽर्द्धम् । कण्डिकाः ३८१२ )

अथाध्यात्मम् । आत्मैवाग्निः प्राणाः शिक्यं प्राणैर्ह्ययमात्मा शक्नोति स्थातुं य्यच्छक्नोति तस्माच्छिक्यं प्राणैरेवैनमेतद्बिभर्त्ति षडुद्यामं भवति षड्ढि प्राणाः[5] ॥२०॥ तस्य मनऽएव प्रतिष्ठा[6] । मनसि ह्ययमात्मा प्रतिष्ठितोऽन्नमासञ्जनमन्ने ह्ययमात्मा प्राणैरासक्तः स य्यो हैतदेवं व्वेदैतेनैव रूपेणैतद्रूपं बिभर्त्ति[7] ॥२१॥ अथैनमुखया बिभर्त्ति । इमे वै लोकाऽउखेमे वाऽएतँल्लोका य्यन्तुमर्हन्त्येभिरेतैँल्लोकैर्देवाऽअबिभरुरेभिरेवैनमेतैँल्लोकैर्बिभर्त्ति ॥२२॥ सा य्यदुखा नाम । एतद्वै देवाऽएतेन कर्मणैतयावृतेमाँल्लोकानुदखनन्[8]यदुदखनंस्तस्मादुत्खोत्खा ह वै तामुखेत्याचक्षते परोक्षं परोक्षकामा हि देवाः[9] ॥२३॥ तद्वाऽउखेति द्वेऽअक्षरे । द्विपाद्यजमानो य्यजमानोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतद्बिभर्त्ति सोऽएव कुम्भी सा स्थाली तत्षट् षडृतवः संवत्सरः संवत्सरोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावत्तद्भवति[10] ॥२४॥ अथैनमिण्ड्वाभ्यां परिगृह्णाति । असौ वाऽआदित्यऽएषोऽग्निरहोरात्रेऽइण्ड्वेऽअमुं तदादित्यमहोरात्राभ्यां परिगृह्णाति तस्मादेषोऽहोरात्राभ्यां परिगृहीतः ॥२५॥ य्यद्वेवैनमिण्ड्वाभ्यां परि[11]गृह्णाति । असौ वाऽआदित्यऽएषो-

१. प्रतिष्ठा इति. च. २. वेद इति. घ. ३. देवतम् इति. ग, घ.
४. एवं 'क ग' पुस्तकयोरेव लिखितमुपलभ्यते । ५. प्राणा इति. घ.
६. प्रतिष्ठा. इति. च. ७. बिभर्ति ति. च. एवमग्रेऽपि ८. नुदखनन्निति. घ.
९. देवाः इति. च. १०. भवति इति. च. ११. परिगृह्णाति इति. घ.

ऽग्निरिमाऽउ लोकाविण्ड्वेऽअमुं तदादित्यमाभ्याँल्लोकाभ्यां परिगृ-
ह्णाति तस्मादेषऽआभ्याँल्लोकाभ्यां परिगृहीतः परिमण्डले भवतः
परिमण्डलौ हीमौ लोकौ मौञ्जे त्रिवृती[1] तस्योक्तो बन्धुर्मृदा दिग्धे
तस्योऽएवोक्तोऽथोऽअनातिदाहाय ॥२६॥ अथातः सम्पदेव । आ-
सन्दी चोखा च शिक्यं च रुक्मपाशश्चाग्निश्च रुक्मश्च तत्षड्
ऋतवः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा ताव-
तद्भवतीण्ड्वे तदष्टावष्टाक्षरा गायत्री गायत्रोऽग्निर्यावानग्निर्याव-
त्यस्य मात्रा तावत्तद्भवति[2] ॥२७॥ अथ सर्व्वसम्पत् । चत्वारः पादा-
श्चत्वार्यनूच्यानि शिक्यं च रुक्मपाशश्च यदु किञ्च रज्जव्यꣳ
शिक्यं तदनूखाग्नी रुक्मस्तत्त्रयोदश त्रयोदश मासाः संवत्सरः
संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद्भवति[3] ॥२८॥ Cf.
का. श. ८. ७. १.; तै. सं. ५. १. १०; मै. सं. ३. २. १; काठ
सं. १९. ११; कपि. ३२. १.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे षष्ठकाण्डे
पञ्चमप्रपाठके प्रथमं ब्राह्मणम् ॥ ( अ. ७. १. )

## ६. ५. २.

### ( रुक्मप्रतिमोचनविष्णुक्रमणे )

तं तिष्ठन् प्रतिमुञ्चते[4] । असौ वाऽआदित्यऽएष रुक्मस्तिष्ठतीव
वाऽअसावादित्योऽथो तिष्ठन्वै[5] वीर्यवत्तरऽउदङ् प्राङ् तिष्ठंस्त-
स्योक्तो बन्धुः ॥१॥ "[6]ईशानो रुक्म ऽउर्व्या व्यद्यौदि"ति । ईश्य-
नो ह्येष रुक्मऽउर्व्या विद्योतते "दुर्म्मर्षमायुः श्रिये रुचान"ऽइति
दुर्म्मरं वाऽएतस्यायुः श्रियोऽएष रोचतेऽ "[7]ग्निरमृतोऽअभवद्वयोभि[8]"-

---

१ त्रिवृती इति. ग. २, ३. भवति इति. च.

४. See तै. सं. ५. १. १०. आसीनः प्रतिमुञ्चते । ५. तिष्ठन्वै इति. च.

६-८. मा. सं. १२. १. ९. द्व्योभिरिति इति ग, द्वयोभिरिति इति. घ.

रिति सर्वैर्व्वाऽएष व्वयोभिरमृतोऽभव"[1]द्येनं द्यौरजनयदि"ति द्यौर्व्वाऽएतमजनय "[2]त्सुरेता" ऽइति सुरेता ह्येषा यस्याऽएष रेतः[3] ॥२॥ अथैनमिण्ड्वाभ्यां परिगृह्णाति । "[4]नक्तोषासा समनसा विरूपे" ऽइत्यहोरात्रे वै नक्तोषासा समनसा विरूपे "[5]धापयेते शिशुमेकꣳ समीची" ऽइति यद्वै किञ्चाहोरात्रयोस्तेनैतमेव समीची धापयेते[6] "[7]द्यावाक्षामा रुक्मोऽअन्तर्व्विभाती"ति हरन्नेतद्यजुर्ज्जपतीमे वै द्यावा-पृथिवी द्यावाक्षामा तेऽएष यदन्तरा विभाति तस्मादेतद्धरन्यजुर्ज्ज-पति "[8]देवा ऽअग्निं धारयन्द्रविणोदा" ऽइति परिगृह्य निदधाति प्राणा वै देवा द्रविणोदास्तऽएतमग्रऽएवमधारयंस्तैरेवैनमेतद्धारयति[9] ॥३॥ अथ शिक्यपाशं प्रतिमुञ्चते । "[10]विश्वा रूपाणि प्रतिमुञ्चते कवि"-रित्यसौ[11] वाऽआदित्यः कविर्व्विश्वा रूपा शिक्यं "[12]प्रासावीद्भद्रं द्विपदे चतुष्पद" ऽइत्युद्यन्वाऽएष द्विपदे[13] चतुष्पदे च भद्रं प्रसौति "[14]वि नाकमख्यत्सविता व्वरेण्य" ऽइति स्वर्गो वै लोको नाकस्त-मेषऽउद्यन्नेवानुविपश्य "[15]त्यनु प्रयाणमुषसो विराजती"त्युषा वाऽ-अग्रे व्युच्छति तस्याऽएष व्युष्टिं विराजन्ननूदेति[16] ॥४॥ अथैनमतो विवृत्त्या विकरोति । इदमेवैतद्रेतः सिक्तं विकरोति तस्माद्योनौ रेतः सिक्तं विक्रियते ॥५॥ "[17]सुपर्णोऽसि गरुत्मानि"ति । व्वीर्यं वै सुपर्णो गरुत्मान् व्वीर्यमेवैनमेतदभिसँस्करोति "[18]त्रिवृत्ते शिर" ऽइति त्रिवृतमस्य स्तोमꣳ शिरः करोति "[19]गायत्रं चक्षुरि"ति गायत्रं चक्षुः करोति "[20]बृहद्रथन्तरे पक्षावि[21]"ति बृहद्रथन्तरे पक्षौ करोति "[22]स्तोमऽआत्मे"ति स्तोममात्मानं करोति पञ्चविꣳश"[23]छन्दाꣳ-

१, २. मा. सं. १२. १. ३. रेत इति. घ. ४, ५. मा.सं. १२. २.
६. धापयेते इति. ग. ७, ८. मा. सं. १२. २. ९. धारयति इति. च
१०, १२. मा.सं.१२. ३. ११. त्यसौ इति. ग, घ.
१३. द्विपदे च ष्पदे इति. च. १४, १५. मा. सं. १२. ३.
१६. नूदति इति. च. १७–२०. मा. सं. १२. ४.
२१. पक्षाविति इति. ग. २२, २३ मा. सं. १२. ४.

ानी''ति छन्दांꣳसि वाऽएतस्याङ्गानि ''यजूꣳषि नामे''ति
नमाग्निरित्याचक्षते तदस्य यजूꣳषि नाम ''साम ते तनूर्वाम-
मि''त्यात्मा वै तनूरात्मा ते तनूर्वामदेव्यमित्येत ''यज्ञायज्ञियं
ऽमि''ति यज्ञायज्ञियं पुच्छं करोति ''धिष्ण्याः शफा''ऽइति
ध्यैर्वाऽएषोऽस्मिँल्लोके प्रतिष्ठितः ''सुपर्णोऽसि गरुत्मान्दिवं
स्वः पते''ति तदेनꣳ सुपर्णं गरुत्मन्तं कृत्वाह देवान्गच्छ
लोकं पते''ति ॥६॥ तं वाऽएतम् । अत्र पक्षपुच्छवन्तं विकरोति
यद्वै योनौ रेतो विक्रियते तादृग्जायते तद्यदेतमत्र पक्षपुच्छ-
द्विकरोति तस्मादेषोऽमुत्र पक्षपुच्छवाञ्जायते ॥७॥ तꣳहैके ।
। विकृत्याभिमन्त्र्यान्यां चितिं चिन्वन्ति द्रोणचितं वा रथ-
चितं वा कङ्कचितं वा प्रऽउगचितं वोभयतः प्रऽउगं वा समुह्य-
वा न तथा कुर्याद्यथा पक्षपुच्छवन्तं गर्भं परिवृश्चेत्तादृक्त-
देनꣳ सुपर्णचितमेव चिनुयात् ॥८॥ तमेतया विकृत्या ।
ऊर्ध्वं प्राञ्चं प्रगृह्णात्यसौ वाऽआदित्यऽएषोऽग्निरमुं तदादित्य-
ऽऊर्ध्वं प्राञ्चं दधाति तस्मादसावादित्यऽइत ऽऊर्ध्वः प्राङ् धीयते
हु प्रगृह्णाति परोबाहु ह्येष इतोऽथैनमुपावहरति तमुपावह्य-
रेणाभि धारयति तस्योक्तो बन्धुः ॥९॥ अथ विष्णुक्रमान्क्र-
एतद्वै देवा विष्णुर्भूत्वेमाँल्लोकानक्रमन्त यद्विष्णुर्भूत्वाक्रमन्त
द्विष्णुक्रमास्तथैवैतद्यजमानो विष्णुर्भूत्वेमाँल्लोकान्क्रमते ॥१०॥
स विष्णुर्यज्ञः सः । स यः स यज्ञोऽयमेव स योऽयमग्नि-
ामेतमेव तद्देवाऽआत्मानं कृत्वेमाँल्लोकानक्रमन्त तथैवैतद्य-
ऽएतमेवात्मानं कृत्वेमाँल्लोकान्क्रमते ॥११॥ उदङ् प्राङ् तिष्ठन् ।
तत्प्रजापतिर्विष्णुक्रमैरुदङ् प्राङ् तिष्ठन्प्रजाऽअसृजत तथैवैत-
ानो विष्णुक्रमैरुदङ् प्राङ् तिष्ठन्प्रजाः सृजते ॥१२॥ ''विष्णोः

५. मा. सं १२. ४. ६. एतम् इति. ग, घ. ७. पुच्छवन्तं इति. ग.
See. तै. सं. ५. ४. ११. द्रोणचितं चिन्वीत, कङ्कचितं चिन्वीत इत्यादि ।
कृत्वेति. घ. १०. लोकानिति. घ. ११ मा. सं. १२. ५.

क्रमोऽसी''ति । वि[1]ष्णुर्हि भूत्वा क्रमते ''[2]सपत्नहे''ति सपत्नान्ह्यत्र हन्ति ''[3]गायत्रं छन्दऽआरोहे''ति गायत्रं छन्दऽआरोहति ''[4]पृथिवी-मनु विक्रमस्वे''ति पृथिवीमनु विक्रमते प्रहरति पादं [5]क्रमतऽ-ऊर्द्ध्वमग्निमुद्गृह्णात्यूर्द्ध्वो हि रोहति ॥१३॥ ''वि[6]ष्णोः क्रमोऽसी''ति । वि[7]ष्णुर्हि भूत्वा क्रमते ''[8]ऽभिमातिहे'' त्यभिमातीर्ह्यत्र हन्ति ''[9]त्रैष्टुभं छन्दऽआरोहे''ति त्रैष्टुभं छन्दऽआरोहत्य''[10]न्तरिक्षमनु वि-क्रमस्वे''त्यन्तरिक्षमनु विक्रमते प्रहरति पादं [11]क्रमतऽऊर्द्ध्वमग्निमुद्गृ-ह्णात्यूर्द्ध्वो हि रोहति ॥१४॥ ''वि[12]ष्णोः क्रमोऽसी''ति । विष्णुर्हि भूत्वा क्रमतेऽ''[13]रातीयतो हन्ते''त्यरातीयतो ह्यत्र हन्ति ''[14]जागतं छन्दऽआरोहे''ति जागतं छन्दऽआरोहति ''दिवम[15]नु विक्रमस्वे''ति दिवमनु विक्रमते प्रहरति पादं क्रमतऽऊर्द्ध्वमग्निमुद्गृह्णात्यूर्द्ध्वो हि रोहति ॥१५॥ ''वि[16]ष्णोः क्रमोऽसी''ति । विष्णुर्हि भूत्वा क्रमते ''[17]शत्रूयतो हन्ते''ति [18]शत्रुयतो ह्यत्र हन्त्या''[19]नुष्टुभं छन्दऽआरोहे''त्यानुष्टुभं छन्दऽआरोहति ''दि[20]शोऽनु विक्रमस्वे''ति सर्व्वा दिशोऽनु व्वीक्षते न प्रहरति पादं नेदिमाँल्लोकानतिप्रणश्यानीत्यूर्ध्वमेवाग्निमुद्गृह्णाति सꣳ ह्यारोहति ॥१६॥ Cf. का. श. ८. ७. २; तै. सं. ५. १. १०, ५. २. १; मै. सं. ३. १. १.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे षष्ठकाण्डे
पञ्चमप्रपाठके द्वितीयं ब्राह्मणम् ॥ (अ.७.२.)

६. ५. ३.

( शिक्यपाशोन्मोचनम् )

अथैनमिति प्रगृह्णाति । एतद्वै देवाऽअकामयन्त पर्ज्जन्यो रूपꣳ स्यामेति तऽएतेनात्मना पर्ज्जन्यो रूपमभवंस्तथैवैतद्यजमानऽएतेना-

---

१, ७, विष्णुर्हि इति. ग, घ. २, ४. मा. सं. १२. ५.

५, ११. क्रमत इति. ग, घ. ६, ८-१०, १२-१७. मा. सं. १२. ५.

१८. शत्रूयतो इति. घ. १९, २०. मा. सं. १२. ५.

मना पर्ज्जन्यो रूपं भवति ॥१॥ "अक्रन्ददग्निस्तनयन्निव द्यौ"रिति।
क्रन्दतीव हि पर्ज्जन्यस्तनयन् "क्षामा रेरिहद्वीरुधः समञ्जन्नि"ति
क्षमा वै पर्ज्जन्यो रेरिह्यमाणो वीरुधः समनक्ति "सद्यो जज्ञानो
वीहीमिद्धोऽअख्यदि"ति सद्यो वाऽएष जज्ञानऽइदꣳसर्व्वं विख्या-
य"त्या रोदसी भानुना भात्यन्तरि"तीमे वै द्यावापृथिवी रोदसी
ऽएष भानुनाभाति परोबाहु प्रगृह्णाति परोबाहु हि पर्ज्जन्यः ॥२॥
थैनमुपावहरति। एतद्वै योऽस्मिँल्लोके रसो यदुपजीवनं तेनैतत्स-
र्ध्वऽइमाँल्लोकान् रोहत्यग्निर्व्वाऽअस्मिँल्लोके रसोऽग्निरुपजीवनं तद्य-
ावदेव स्यान्न हास्मिँल्लोके रसो नोपजीवनꣳस्यादथ यत्प्रत्यवरोह-
ास्मिन्नेवैतल्लोके रसमुपजीवनं दधाति ॥३॥ यद्वेव प्रत्यवरोहति।
तद्वाऽएतदिमाँल्लोकानितऽऊर्ध्वो रोहति स स पराङिव रोहऽइयमु
प्रतिष्ठा तद्यत्तावदेव स्यात्प्र हास्माल्लोकाद्यजमानश्च्यवेताथ यत्प्र-
ावरोहतीमामेवैतत्प्रतिष्ठामभिप्रत्यैत्यस्यामेवैतत्प्रतिष्ठायां प्रतितिष्ठति
॥४॥ यद्वेव प्रत्यवरोहति। एतद्वाऽएतदिमाँल्लोकानितऽऊर्द्ध्वो
यति स स पराङिव जयो यो वै पराङेव जयत्यन्ये वै तस्य जित-
ववस्यन्त्यथ यऽउभयथा जयति तस्य तत्र कामचरणं भवति तद्य-
त्यवरोहतीमानेवैतल्लोकानितश्चोर्द्ध्वानमुतश्चार्व्वाचो जयति ॥५॥
अग्नेऽभ्यावर्त्तिन्। अभि मा निवर्त्तस्वाग्नेऽअङ्गिरः पुनरूर्ज्जा सह रय्ये"
तेन मा सर्व्वेणाभिनिवर्त्तस्वेत्येतच्चतुष्कृत्वः प्रत्यवरोहति चतुर्हि
वऽऊर्द्ध्वो रोहति तद्यावत्कृत्वऽऊर्द्ध्वो रोहति तावत्कृत्वः प्रत्यव-
हति तमुपावहृत्योपरिनाभि धारयति तस्योक्तो बन्धुः ॥६॥ अथैन-
मन्त्रयते। आयुर्व्वाऽअग्निरायुरेवैतदात्मन्धत्तऽ"आ त्वाहार्षमि"
ह्येनꣳहरन्त्य"न्तरभूरि"त्यायुरेवैतदन्तरात्मन्धत्ते "ध्रुवस्तिष्ठा

---

भवति इति. घ.   २–५. मा. सं. १२. ६.   ६. पर्जन्य इति. घ.
एतद्वै इति. ग, घ.   ८. सहोर्ध्वं इति. ग, घ.   ९. एतदिमानिति. ग, घ.
. जयति इति. च.   ११–१४. मा. सं. १२. ७–१०.   १५, १६. मा. सं १२. ११.
. एवैतदात्मन्धत्ते इति. ग, घ.   १८. मा. सं. १२. ११.

विचाचलिरि"त्यायुरेवैतद्ध्रुवमन्तरात्मन्धत्ते "[1]विशस्त्वा सर्व्वा व्वाञ्छन्त्वि"त्यन्नं वै विशोऽन्नं त्वा सर्व्वं व्वाञ्छत्वित्येत"[2]न्मा त्वद्राष्ट्रम[3]धिभ्रशादि"ति श्रीर्व्वै राष्ट्रं मा त्वच्छ्रीरधिभ्रशादित्येतत्[4] ॥७॥

( अर्द्धप्रपाठकः )

अथ शिक्यपाशं[5] च रुक्मपाशं चोन्मुञ्चते । व्वारुणो वै पाशो व्वरुणपाशादेव तत्प्रमुच्यते व्वारुण्यर्चा स्वेनैव तदात्मना स्वया देवतया व्वरुणपाशात्प्रमुच्यतऽ"[6]उदुत्तमं व्वरुण पाशमस्मदवाधमं विमध्यमᳪश्रथाये"ति य्यथैव य्यजुस्तथा बन्धु[7]"[8]रथा व्वयमादित्य व्व्रते तवानागसोऽअदितये स्यामे"तीयं वाऽअदितिरनागसस्तुभ्यं चास्यै च स्यामेत्येतत्[9] ॥८॥ अथैनामिति प्रगृह्णाति । एतद्वाऽएनमदो विकृत्येतऽऊर्ध्वं प्राञ्चं प्रगृह्णाति तं ततऽइति प्रगृह्णाति तद्यत्तावदेवाभविष्यदत्र हैवैष व्यरᳪस्यताथ य्यदेनामिति प्रगृह्णाति तस्मादेषं[10]ऽइतीत्वाथेति पुनरैति[11] ॥९॥ "[12]अग्ने बृहन्नुषसामूर्ध्वोऽअस्थादि"ति । अग्ने ह्येष बृहन्नुषसामूर्ध्वस्तिष्ठति "निर्जगन्वा[13]न्तमसो ज्योतिषागादि"ति निर्ज्जगन्वान्वाऽएष राज्यै तमसो[14]ऽह्ना ज्योतिषै"[15]त्यग्निर्भानुना रुशता स्वङ्ग"ऽइत्यग्निर्व्वाऽएष भानुना रुशता स्वङ्गऽ"[16]आ जातो विश्वा सद्मान्यप्रा"ऽइतीमे वै लोका विश्वा सद्मानि तानेष जातऽआपूरयति परोबाहु प्रगृह्णाति परोबाहु ह्येष ऽइतोऽथैनमुपावहरतीमामेवैतत्प्रतिष्ठामभिप्रत्यैत्यस्यामेवैतत्प्रतिष्ठायां प्रतितिष्ठति जगत्या जगती हेमाँल्लोकानमुतोऽर्व्वाचो व्यश्नुते[17] ॥१०॥ "[18]हᳪसः शुचिषदि"ति । असौ

---

१. २. मा. सं. १२. ११. ३. मभिभ्रशादिति. ग. ४. एतत इति. घ.
५. पाशं इति. घ. ६, ८. मा. सं १२. १२. ७. बन्धुरथा इति. ग, घ.
९. एतत् इति. घ. १०. देष इति. ग, घ ११. पुनरेति इति. घ.
१२, १३. मा.सं. १२. १३. १४. तमसो इति. घ. १५, १६. मा.सं. १२. १३.
१७. व्यश्नुते इति. च. १८. मा. सं. १२. १४.

ऽआदित्यो ह्वॕसः शुचिष"[1]द्वसुरन्तरिक्षसदि"ति व्वायुर्व्वै व्वसु-
रन्तरिक्षस"[2]द्धोता व्वेदिषदि"त्यग्निर्व्वै होता व्वेदिष"[3]दतिथिरि"ति
सर्व्वेषां वाऽएष भूतानामतिथि"[4]र्दुरोणसदि"ति विषमसदित्येत"[5]न्नृ-
षदि"ति प्राणो [6]वै नृषन्मनुष्या नरस्तद्योऽयं मनुष्येषु प्राणोऽग्निस्तमे-
तदाह "[7]व्वरसदि"ति सर्व्वेषु ह्येष व्वरेषु सन्न[8]ऽ"ऋतसदि"ति सत्य-
सदित्येत"[9]द्व्योमसदि"ति सर्व्वेषु ह्येष व्योमसु सन्नो[10]ऽ"[11]ब्जा गोजा"
इत्यब्जाश्च ह्येष गोजाश्च"[12]र्त्तजाऽ"इति सत्यजाऽइत्येत"[13]दद्रिजा"ऽइत्य-
द्रिजा ह्येषऽ"[14]ऋतमि"ति सत्यमित्ये"[15]तद्बृहदि"ति निदधाति बृहद्ध्येष
यदेष तदेनमेतत्कृत्वा नि[16]दधाति ॥११॥ द्वाभ्यामक्षराभ्याम् । द्विपा-
द्यजमानो यजमानोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेत-
न्निदधाति ॥१२॥ अथैनमुपतिष्ठते । एतद्वाऽएनमेतल्लघूयतीव यदे-
न सहेति चेति चेमाँल्लोकान्क्रमते तस्माऽएवैतन्निह्नुतेऽहिᳬसा-
यै ॥१३॥ यद्वेवोपतिष्ठते। एतद्वै देवाऽअबिभयुर्य्यद्वै नोऽयमिमाँल्लो-
कानन्तिकान्न हिᳬस्यादिति तदेभ्यऽएवैनमेतल्लोकेभ्योऽशमयंस्तथै-
वैनमयमेतदेभ्यो लोकेभ्यः शमयति ॥१४॥ "[17]सीद त्वं मातुः। अस्या-
ऽउपस्थेऽन्त[18]रग्ने रुचा त्वᳬ [19]शिवो भूत्वा मह्यमग्नेऽअथो सीद शिव-
स्त्वमि"ति शिवः शिवऽइति शमयत्येवैनमेतदहिᳬसायै तथो हैष-
इमाँल्लोकाञ्छान्तो न हिनस्ति ॥१५॥ त्रिभिरुपतिष्ठते । त्रयऽइमे लो-
काऽअथो त्रिवृदग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवास्माऽएत-
न्निह्नुतेऽथो तावतैवैनमेतदेभ्यो लोकेभ्यः शमयति ॥१५॥ Cf. का.
८. ७. ३; मै. सं. ३. २. १; तै. सं. ५. २. १; कठ. सं.
२. ११; कपि. ३२. १.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे षष्ठकाण्डे
पञ्चमप्रपाठके तृतीयं ब्राह्मणम् ॥ (अ. ७. ३.)

---

१-५ मा. सं. १२. १४. ६. वै इति ग, घ. ७, ९-१५. मा. सं. १२, १४.
८. वरेषु इति. घ. १६. निदधाति इति. च. १७-१९. मा. सं. १२. १५-१७

६. ५. ४.

( वात्सप्रोपस्थानादि )

अथ व्वात्सप्रेणोपतिष्ठते । एतद्वै प्रजापतिर्व्विष्णुक्रमैः प्रजाः सृष्ट्वा ताभ्यो व्वात्सप्रेणायुष्यमकरोत्तथैवैतद्यजमानो व्विष्णुक्रमैः प्रजाः सृष्ट्वा ताभ्यो व्वात्सप्रेणायुष्यं करोति ॥१॥ स हैष दाक्षायण-हस्तः। य्यद्वात्सप्रं तस्माद्यं जातं कामयेत सर्व्वमायुरियादिति व्वात्स-प्रेणैनमभिमृशेत्तदस्मै जातायायुष्यं करोति तथो ह स सर्व्वमायुरेत्यथ य्यङ्कामयेत व्वीर्य्यवान्त्स्यादिति विकृत्यैनं[1] पुरस्तादभिमन्त्रयेत तथो ह स व्वीर्य्यवान्भवति॥२॥ "दिवस्परि प्रथमं जज्ञेऽअग्निरि"ति । प्राणो वै दिवः प्राणाद्‌ वाऽएष प्रथममजायता"मस्मद्द्वितीयं परि जातवेदा" ऽइति य्यदेनमदो द्वितीयं पुरुषविधोऽजनय"त्तृतीयमप्स्वि"ति य्यदे-नमदस्तृतीयमद्भ्योऽजनय"न्नृमणाऽअजस्रमि"ति प्रजापतिर्व्वै नृम-णाऽअग्निरजस्रऽ"इन्धानऽएनं जरते स्वाधी"रिति यो वाऽएनमिन्द्धे सऽएनञ्जनते स्वाधीः ॥३॥ "व्विद्मा तेऽअग्ने त्रेधा त्रयाणी"ति । अग्निर्व्वायुरादित्यऽएतानि हास्य तानि त्रेधा त्रयाणि "व्विद्मा ते धाम व्विभृता पुरुत्रे"ति य्यदिदं बहुधा व्विह्रियते "विद्मा ते नाम परमं गुहा यदि"ति य्यविष्ठऽइति वाऽअस्य तन्नाम परमं गुहा "व्विद्मा त-मुत्सं य्यतऽआजगन्थे"त्यापो वाऽउत्सोऽद्भ्यो वाऽएष प्रथममाज-गाम ॥४॥ "समुद्रे त्वा नृमणाऽअप्स्वन्त"रिति । प्रजापतिर्व्वै नृम-णाऽअप्सु त्वा प्रजापतिरित्येत"न्नृचक्षाऽईधे दिवोऽअग्नऽऊध-न्नि"ति प्रजापतिर्व्वै नृचक्षाऽआपो दिव ऽऊध"स्तृतीये त्वा रजसि तस्थिवाँ सामि"ति द्यौर्व्वै तृतीयꣳ रजोऽ"पामुपस्थे महिषा ऽअव-र्द्धन्नि"ति प्राणा वै महिषा दिवि त्वा प्राणाऽअवर्द्धन्नित्येतत् ॥५॥ ता-ऽएताऽएकव्याख्यानाः । एतमेवाभि ताऽआग्नेय्यस्त्रिष्टुभस्ता य्यदा-ग्नेय्यस्तेनाग्निरथ य्यत्त्रिष्टुभो यदेकादश तेनेन्द्रऽऐन्द्राग्नोऽग्निर्य्यावान-

१. विकृत्येति. ग, घ.  २-६. मा. सं. १२.१८.
७-१०. मा. सं. १२. १९.  ११-१४. मा. सं. १२. २०.

श्यिर्यावत्यस्य मात्रा तावतैवैनमेतदुपतिष्ठतऽइन्द्राग्नी वै सर्व्वे देवाः
सर्व्वदेवत्योऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतदुपति-
ष्ठते ॥६॥ द्व्यद्धेव विष्णुक्रमवात्सप्रे भवतः । विष्णुक्रमैर्व्वै प्रजा-
पतिरिमँल्लोकमसृजत वात्सप्रेणाग्निं विष्णुक्रमैर्व्वै प्रजापतिरन्त-
रिक्षमसृजत वात्सप्रेण वायुं विष्णुक्रमैर्व्वै प्रजापतिर्दिवमसृजत
वात्सप्रेणादित्यं विष्णुक्रमैर्व्वै प्रजापतिर्दिशोऽसृजत वात्सप्रेण
चन्द्रमसं विष्णुक्रमैर्व्वै प्रजापतिर्भूतमसृजत वात्सप्रेण भविष्यद्वि-
ष्णुक्रमैर्व्वै प्रजापतिर्व्वित्तमसृजत वात्सप्रेणाशां विष्णुक्रमैर्व्वै प्रजा-
पतिरहरसृजत वात्सप्रेण रात्रिं विष्णुक्रमैर्व्वै प्रजापतिः पूर्व्वपक्षा-
नसृजत वात्सप्रेणापरपक्षान्विष्णुक्रमैर्व्वै प्रजापतिरर्द्धमासानसृजत
वात्सप्रेण मासान्विष्णुक्रमैर्व्वै प्रजापतिर्ऋतूनसृजत वात्सप्रेण
संवत्सरं तद्यद्विष्णुक्रमवात्सप्रे भवतऽएतदेव तेन सर्व्वं सृजते
॥७॥ द्व्यद्धेव विष्णुक्रमवात्सप्रे भवतः । विष्णुक्रमैर्व्वै प्रजापतिः
स्वर्गँल्लोकमभिप्रायात्सऽएतदवसानमपश्यद्वात्सप्रं तेनावास्यदप्र-
ग्राहाय यद्धि द्युक्तं न विमुच्यते प्र तद्ह्यते तथैवैतद्यजमानो
विष्णुक्रमैरेव स्वर्गँल्लोकमभिप्रयाति वात्सप्रेणावस्यति ॥८॥ स
वै विष्णुक्रमान् क्रान्त्वा । अथ तदानीमेव वात्सप्रेणोपतिष्ठते द्यु-
क्ता प्रयायाथ तदानीमेव विमुञ्चेत्ताहक्तद्देवानां वै विधामनु मनु-
ष्यास्तस्मादु हेदमुत मानुषो ग्रामः प्रयायाथ तदानीमेवावस्यति
॥९॥ तद्वा ऽअहोरात्रे ऽएव विष्णुक्रमा भवन्ति । अहोरात्रे वा-
त्सप्रमहोरात्रेऽएव तद्यात्यहोरात्रे क्षेम्यो भवति तस्मादु हेदमुत
मानुषो ग्रामोऽहोरात्रे यात्वाहोरात्रे क्षेम्यो भवति ॥१०॥ स वाऽ
अर्द्धमेव संवत्सरस्य विष्णुक्रमान् क्रमते । अर्द्धं वात्सप्रेणोपतिष्ठते
मध्ये ह संवत्सरस्य स्वर्गो लोकः स यत्कनीयोऽर्द्धात्क्रमेत न
तं स्वर्गँल्लोकमभिप्राप्नुयादथ यद्भूयोऽर्द्धात्पराङ् हैतं स्वर्गं-

१. नसृजत इति. ग, घ.   २. क्रान्त्वा । अथ तदानीमेव. ग, घ.
३. क्रमान् क्रमते इति. ग, घ.   ४. दथ इति ग, घ.

ल्लोकमतिप्रणश्येदथ यदर्द्धं क्रमतेऽर्द्धमुपातिष्ठते तत्सम्प्रति स्वर्गं
ल्लोकमाप्त्वा विमुञ्चते ॥११॥ ताभ्यां वै विपर्य्यासमेति । यथा
हान्तमध्वानं विमोकᳬ समश्नुवीत तादृक्तत्स वै पुरस्ताच्चोप-
रेष्टाच्चोभे विष्णुक्रमवात्सप्रे समस्यत्यहर्व्वै विष्णुक्रमा रात्रि-
र्वात्सप्रमेतद्वाऽइदᳬ सर्व्वं प्रजापतिः प्रजनयिष्यंश्च प्रजनयित्वा
ाहोरात्राभ्यामुभयतः पर्य्यगृह्णात्तथैवैतद्यजमान इदᳬ सर्व्वं प्रजन-
येष्यंश्च प्रजनयित्वा चाहोरात्राभ्यामुभयतः परिगृह्णाति ॥१२॥
दाहुः । यदहर्व्विष्णुक्रमा रात्रिर्व्वात्सप्रमथोभेऽएवाहन्भवतो न
ात्र्यां कथमस्यापि रात्र्यां कृते भवतऽइत्येतद्वाऽएनेऽअदो दीक्ष-
ाणः पुरस्तादपराह्णऽउभे समस्यति रात्रिर्हैतद्यदपराह्णोऽथैनेऽएत-
ञ्चिन्वन्स्यन्नुपरिष्टात्पूर्वाह्णऽउभे समस्यत्यहर्हैतद्यत्पूर्व्वाह्णऽएवमु
ास्योभेऽएवाहन्कृते भवतऽउभे रात्र्याᳬ ॥१३॥ स यदहः सञ्चि-
ष्यन्त्स्यात् । तदहः प्रातरुदितऽआदित्ये भस्मैव प्रथममुद्वपति
स्मोदुप्य व्वाचं व्विसृजते व्वाचं व्विसृज्य समिधमादधाति
मिधमाधाय भस्मापोऽभ्यवहरति[1] यथैव तस्याभ्यवहरणं तथा-
दाय भस्मनः प्रत्येत्योखायामोप्योपतिष्ठतेऽथ प्रायश्चित्ती करोति
१४॥ स यदि विष्णुक्रमीयमहः स्यात् । विष्णुक्रमान् क्रान्त्वा
ात्सप्रेणोपतिष्ठेताथ यदि व्वात्सप्रीयं व्वात्सप्रेणोपस्थाय विष्णु-
मान्क्रान्त्वा व्वात्सप्रमन्ततः[2] कुर्यान्न विष्णुक्रमानन्ततः कुर्याद्यथा
ाय न विमुञ्चेत्तादृक्तदथ यद्वात्सप्रमन्ततः करोति प्रतिष्ठा वै
ात्सप्रं यथा प्रतिष्ठापयेदवसाययेत्तादृक्तत्तस्मादु व्वात्सप्रमेवा-
तः कुर्यात् ॥१५॥ Cf. का. श. ८. ७. ४; तै. सं. ५. २. १;
सं. ३. २. २; कठ. १९. १२; कपि. ३२. २.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे षष्ठकाण्डे
पञ्चमप्रपाठके चतुर्थं ब्राह्मणम् ॥ (अ. ७. ४.)

( सप्तमोऽध्यायः )

---

१. अभ्यवहरति इति. घ. २. मन्तत इति. घ.

६. ५. ५.

( उख्याग्निप्रणयनम् )

व्वनीवाह्येताग्निं बिभ्रदित्याहुः । देवाश्चासुराश्चोभये प्राजाप·
ऽअस्पर्द्धन्त ते देवाश्चक्रमचरञ्छालमसुरा ऽआसंस्ते देवाश्चक्रेण
न्त ऽएतत्कर्म्मापश्यंश्चक्रेण हि वै देवाश्चरन्त ऽएतत्कर्म्मापश्यं-
मादनस ऽएव पौराडाशेषु यजूंष्यनसोऽग्नौ ॥१॥ स व्यो
ोवाह्येते । देवान् कर्म्मणैति दैवᳪहास्य कर्म्म कृतं भवत्यथ व्यो
वनीवाह्यतेऽसुरान् कर्म्मणैत्यसुर्यᳪहास्य कर्म्म कृतं भवति ॥२॥
कऽआहुः । स्वयं वाऽएष व्वनीवाहितो विष्णुक्रमैर्व्वाऽएष
ति व्वात्सप्रेणावस्यतीति न तथा विद्याद्दैवं वाऽअस्य तत्प्र-
यद्विष्णुक्रमा दैवमवसानं यद्वात्सप्रमथास्येदं मानुषं प्रयाणं
देदं प्रयाति मानुषमवसानं यदवस्यति ॥३॥ प्रजापतिरेषो-
ः । उभयम्वेतत्प्रजापतिर्यच्च देवा यच्च मनुष्यास्तद्यद्विष्णु-
वात्सप्रे भवतो यद्देवास्य दैवᳪ रूपं तदस्य तेन सँस्करोत्यथ
नीवाह्यते यद्देवास्य मानुषᳪ रूपं तदस्य तेन सँस्करोति स
ऽएतᳪ सर्व्वं कृत्स्नं प्रजापतिᳪ सँस्करोति यऽएवं विद्वा-
ोवाह्यते तस्मादु व्वनीवाह्येतैव ॥४॥ स यदहः प्रयास्यन्स्यात् ।
रुत्तरतोऽग्नेः प्रागन ऽउपस्थाप्याथास्मिन्त्समिधमादधात्येतद्वा-
देवाऽएष्यन्तं पुरस्तादन्नेनाप्रीणन्नेतया समिधा तथैवैनमयमे-
यन्तं पुरस्तादन्नेन प्रीणात्येतया समिधा ॥५॥ "समिधाग्निं दुव-
"ति । समिधाग्निं नमस्यतेत्येतद् "घृतैर्बोधयतातिथिमास्मिन्हव्या-
जुहोतने"ति घृतैरह बोधयतातिथिमोऽअस्मिन्हव्यानि जुहुते-
द्बुद्ध्यत्येत्यायै ह्येनमेतद्बोधयति ॥६॥ अथैनमुद्यच्छति । "उदु
विश्वे देवाऽअग्ने भरन्तु चित्तिभिरि"ति विश्वे वाऽएतमग्रे

१. अग्नौ इति. घ. २. यद्देवास्येति ग, घ. ३, ४. मा. सं. १२. ३०
५. मा.सं १२. ३१.

देवाश्चित्तिभिरुदभरन्नेतद्ध्येषां तदा चित्तमासीत्तथैवैनमयमेतच्चित्तिभिरुद्धरत्येतद्ध्यस्य तदा चित्तं भवति "सं नो भव शिवस्त्वꣳ सुप्रतीको विभावसुरि"ति यथैव यजुस्तथा बन्धुस्तन्दक्षिणतऽउदञ्चमादधाति तस्योक्तो बन्धुः स्थाल्यां गार्हपत्यꣳ समुप्यापरमादधाति स यदि कामयेतोपाधिरोहेत्पार्श्वतो वा व्रजेत् ॥७॥ अथानड्वाहौ युनक्ति । दक्षिणमग्रेऽथ सव्यमेवं देवत्रेतरथा मानुषे स यां काञ्च दिशं यास्यन्त्स्यात्प्राङेवाग्रे प्रयायात्प्राची हि दिगग्नेः स्वामेव तद्दिशमनु प्रयाति ॥८॥ "प्रेदग्ने ज्योतिष्मान्याहि । शिवेभिरर्च्चिभिष्ट्व"मिति प्रेदग्ने त्वं ज्योतिष्मान्याहि शिवेभिरर्च्चिभिर्दीप्यमानैरित्येतद् "बृहद्भिर्भानुभिर्भासन्मा हिꣳसीस्तन्वा प्रजा"ऽइति बृहद्भिरर्च्चिभिर्दीप्यमानैर्मा हिꣳसीरात्मना प्रजाऽइत्येतत् ॥९॥ स यदाक्षऽउत्सर्ज्जेत् । अथैतद्यजुर्ज्जपेदसुर्य्या वाऽएषा वाग्याक्षस्य तामेतच्छामयति तामेतद्देवत्रा करोति ॥१०॥ यद्वेवैतद्यजुर्ज्जपति । यस्मिन्वै कस्मिंश्चाहितेऽक्ष ऽउत्सर्ज्जति तस्यैव सा वाग्भवति तद्यदग्नावाहितेऽक्ष ऽउत्सर्ज्जत्यग्नेरेव सा वाग्भवत्यग्निमेव तद्देवा ऽउपास्तुवन्नुपामहयंस्तथैवैनमयमेतदुपस्तौत्युपमहय "त्यक्रन्ददग्निस्तनयन्निव द्यौरि"ति तस्योक्तो बन्धुः ॥११॥ स यदि पुरा वसत्यै विमुञ्चेत् । अनस्येवाग्निः स्यादथ यदा वसत्यै विमुञ्चेत प्रागनऽउपस्थाप्योत्तरत ऽउद्धृत्यावोक्षति यत्रैनमुपावहरति तं दक्षिणत ऽउदञ्चमुपावहरति तस्योक्तो बन्धुः ॥१२॥ अथास्मिन्त्समिधमादधाति । एतद्वाऽएनं देवाऽईयिवाꣳसमुपरिष्टादन्नेनाप्रीणन्नेतया समिधा तथैवैनमयमेतदीयिवाꣳसमुपरिष्टादन्नेन प्रीणात्येतया समिधा ॥१३॥ "प्र प्रायमग्निर्भरतस्य शृण्व"ऽइति ।

१. मा. सं. १२. ३१. २. सव्यमेवं इति. घ. ३. स्वामेवेति. घ.
४, ५. मा. सं. १२. ३२. ६. मा सं. १२. ३३.
७. विमुञ्चेत इति ग. विमुञ्चेत इति घ. ८. अनस्येवेति घ.
९. समिधमिति घ. १०. मा. सं. १२. ३४.

जापतिर्व्वै भरतः स हीदँ सर्व्वं बिभर्त्ति "वि यत्सूर्यो न रोचते हद्भा"ऽइति वि यत्सूर्यऽइव रोचते बृहद्भाऽइत्येत"दभि यः रुं पृतनासु तस्था" विति पूरुर्ह नामासुररक्षसमास तमग्निः पृतास्वभितष्ठौ "दीदाय दैव्योऽअतिथिः शिवो न"ऽइति दीप्यमानो वोऽतिथिः शिवो नऽइत्येतत्स्थितवत्या व्वैसत्यै ह्येनमेतत्स्थापयति १४॥ अथातः सम्पदेव । सामिधं प्रथमेनादधात्युद्यच्छत्येकेन प्रयाकेनाक्षमेकेनानुमन्त्रयते [5]समिधमेव पञ्चमेनादधाति तत्पञ्च पञ्चत्रातिकोऽग्निः पञ्चर्त्तवः संवत्सरः संवत्सरोऽग्निर्य्यावानग्निर्य्यावत्यय मात्रा तावत्तद्भवति ॥१५॥ Cf. का. श. ८. ८. १; तै. सं. . २. २; मै. सं. ३. १. २ ; कठ. १९. १२ ; कपि. ३२. २.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे षष्ठकाण्डे
पञ्चमप्रपाठके पञ्चमं ब्राह्मणम् ॥ (अ. ८. १.)

६. ५. ६.

अथातो भस्मनऽएवाभ्यवहरणस्य । देवा वाऽएतदग्रे भस्मोद्पंस्तेऽब्रुवन्यदि वाऽइदमित्थमेव सदात्मानमभिसंस्करिष्यामहे मर्त्याः णपा ऽअनपहतपाप्मानो भविष्यामो यद्यु परावप्स्यामो यदत्रायं बहिर्द्धा तदग्नेः करिष्याम ऽउप तज्जानीत यथेदङ्करवामेति तेब्रुवंश्चेतयध्वमिति चितिमिच्छतेति वाव तदब्रुवंस्तदिच्छत यथेदङ्करामेति ॥१॥ ते चेतयमानाः । एतदपश्यन्नप ऽएवैनदभ्यवहरामापो ऽअस्य सर्व्वस्य प्रतिष्ठा तद्यत्रास्य सर्व्वस्य प्रतिष्ठा तदेनत्प्रतिष्य यदत्राग्नेयन्तदद्भ्योऽधि जनयिष्याम ऽइति तदपोऽभ्यवाहरंथैवैनदयमेतदपोऽभ्यवहरति ॥२॥ "आपो देवीः । प्रतिगृभ्णीत स्मैतत्स्योने कृणुध्वँ सुरभाऽउ लोक"ऽइति जग्धं वाऽएतद्यातम भवति तदेतदाह सुभिष्ठऽएनल्लोके कुरुध्वमिति "तस्मै नमन्तां

१–३. मा. सं. १२. ३४. ४. वसत्यै इति. ग.१, घ. ५. समिधमेवेति घ.
६. वपंस्ते इति. घ. ७, ८. मा. सं. १२. ३५.

जनय" ऽइत्यापो वै जनयोऽद्भ्यो हीदꣳसर्व्वं जायते "[1]सुपत्नी
रित्यग्निना वाऽआपः सुपत्न्यो "[2]मातेव पुत्रं बिभृताप्स्वेनदि"
त्यथा माता पुत्रमुपस्थे बिभृयादेवमेनद्बिभृतेत्येतत् ॥३॥ "[3]अप्स्व
ग्ने सधिष्ट्वे"ति । अप्स्वग्ने योनिष्ट्वेत्येतत् "[5]सौषधीरनुरुध्यस
ऽइत्योषधीर्ह्यपोऽनुरुध्यते "[6]गर्भे सञ्जायसे पुनरि"ति गर्भो हि
सञ्जायते पुन"[7]र्गर्भोऽअस्योषधीनां गर्भो व्वनस्पतीनाम् । गर्भो वि
श्वस्य भूतस्याग्ने गर्भोऽअपामसी"ति तदेनमस्य सर्व्वस्य ग
करोति ॥४॥ त्रिभिरभ्यवहरति । त्रिवृदग्निर्यावानग्निर्यावत्यस्य
मात्रा तावतैवैनदेतदभ्यवहरत्येकेनाग्रेऽथ द्वाभ्यां द्वाभ्यां वाग्रेऽथैके
द्विस्तु कृत्वोऽभ्यवहरति तद्वै द्विपादाः पशवस्तैरेवैनदेतदभ्यवह
रति ॥५॥ अथापादत्ते । तद्यदत्राग्नेयं तदेतदद्भ्योऽधि जनयत्य
नयानया वै भेषजं क्रियतेऽनयैवैनमेतत्सम्भरति "[8]प्रसद्य भस्मन
योनिमपश्च पृथिवीमग्न"ऽइति प्रसन्नो ह्येष भस्मना योनिमपश्च
पृथिवीञ्च भवति "[9]सꣳसृज्य मातृभिष्ट्वं ज्योतिष्मान्पुनरासद" *ऽइ[10]ति
सङ्गत्य मातृभिष्ट्वञ्ज्योतिष्मान्पुनरासद*ऽइत्येतत् "[11]पुनरासद्य सदनं
"पुनरूर्ज्जा" "सह रय्ये"त्येतेन मा सर्व्वेणाभिनिवर्त्तस्वेत्येतत् ॥६॥
चतुर्भिरपादत्ते । तद्वै चतुष्पादाः पशवस्तैरेवैनमेतत्सम्भरत्यथोऽ
अन्नं वै प[12]शवोऽन्नेनैवैनमेतत्सम्भरति त्रिभिरभ्यवहरति तत्सप्त सप्त-
चितिकोऽग्निः सप्तर्त्तवः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य
मात्रा तावत्तद्भवति ॥७॥ अपादाय भस्मनः प्रत्येत्य । उखायामोप्यो-
पतिष्ठतऽएतद्वाऽएतदयथायथं करोति यदग्निमपोऽभ्यवहरति तस्माऽ-
एवैतन्निह्नुतेऽहिꣳसायाऽआग्नेयीभ्यामग्नयऽएवैतन्निह्नुते बुद्धव-
तीभ्यां यथैवास्यैतदग्निर्व्वचो निबोधेत् ॥८॥ "[13]बोधा मेऽअस्य व्वच-

१, २. मा. सं. १२. ३५. ३, ५, ६. मा.सं. १२.३६.
४. सधिष्ट्वेति घ. ७, मा. सं. १२, ३७.
८, ९. मा. सं. १२. ३८. १०. *एतच्चिह्नान्तर्गतः पाठो 'गघ'पुस्तकयोर्नास्ति।
११. मा. सं. १२. ३९-४१ १२. पशव इति. घ. १३. मा. सं. १२. ४२.

र्य्यविष्ठे''ति । बोध मेऽस्य व्वचसो र्य्यविष्ठेत्ये त''न्स्म(ँ)हिष्ठस्य
तस्य स्वधाव''ऽइति भूयिष्ठस्य प्रभृतस्य स्वधावऽइत्येत''त्पी-
त त्वोऽअनु त्वो गृणाती''ति पीयत्येकोऽन्वेको गृणाति ''व्वन्दा-
तन्वं व्वन्देऽअग्न''ऽइति व्वन्दिता तेऽहं तन्वं व्वन्देऽग्नऽइत्येत''त्स-
धे सूरिर्म्मघवा व्वसुपते व्वसुदावन् । य्युयोध्यस्मद्द्वेषा(ँ)सी''ति
थैवास्माद्द्वेषा(ँ)सि य्युयादेवमेतदाह द्वाभ्यामुपतिष्ठते गायत्र्या
त्रैष्टुभा च तस्योक्तो बन्धुः ॥९॥ तानि नव भवन्ति । नव दिशो-
शोऽग्निर्नव प्राणाः प्राणाऽअग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा
वत्तद्भवति ॥१०॥ अथ प्रायश्चित्ती करोति । सर्व्वेभ्यो वाऽएषऽएतं
मेभ्यऽआधत्ते तद्यदेवास्यात्र कामानां व्यवच्छिद्यतेऽग्नावपोऽभ्य-
ह्यमाणे तदेवैतत्सन्तनोति सन्दधात्युभे प्रायश्चित्ती करोति य्येऽ-
ग्नावनुगते तस्योक्तो बन्धुः ॥११॥ तानि दश भवन्ति । दशा-
रा व्विराड्विराडग्निर्दश दिशो दिशोऽग्निर्दश प्राणाः प्राणाऽअ-
र्य्यावानग्निर्य्यावत्यस्य मात्रा तावत्तद्भवति ॥१२॥ Cf. का. श.
८. १; तै. सं. ५. २. २; मै. सं. ३. २. २; कठ. १९.
; कपि. ३२. २.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे षष्ठकाण्डे
पञ्चमप्रपाठके षष्ठं ब्राह्मणम् ॥ ( अ.८.२. )

इति पञ्चमः प्रपाठकस्समाप्तः ॥

( कण्डिका संख्या १०२ )

( इत्यष्टमोऽध्यायः )

इति माध्यन्दिनीये शतपथब्राह्मणे उखासम्भरणं नाम
षष्ठं काण्डं समाप्तम् ॥

( अस्मिन् काण्डे कण्डिकासंख्या ५३० )

---

१–३. मा. सं. १२. ४२.  ४. मा. सं. १२. ४३.
५. द्वेषा(ँ)सि इति. घ.  ६. सन्दधात्युभे इति. ग, घ, ङ.

॥ श्रीः ॥

# अथ माध्यन्दिनशाखीये शतपथब्राह्मणे

# हस्तिघटनामकं सप्तमं काण्डम् ॥

## ( अत्राऽपि चयनविधिरेव )

## प्रथमप्रपाठके प्रथमं ब्राह्मणम् ॥

## ७. १. १.

### ( गार्हपत्यचितिः )

हरिः ॐ । गार्हपत्यं चेष्यन्पलाशशाखया व्युदूहति[1] । अवस्यति हैतद्यद्गार्हपत्यं चिनोति य्यऽउ वैके चाग्निचितोऽस्यामेव तेऽवसितास्तद्यद्व्युदूहत्यवसितानेव तद्व्युदूहति नेदवसितानध्यवस्यानीति ॥१॥ "अपेत[2] व्वीत व्वि च सर्प्पतात"ऽइति[3] । अप चैवेत व्वि चेत व्यु च सर्प्पतातऽइत्येतद्यऽउदरसर्प्पिणस्तानेतदाह "य्येऽत्र[4] स्थ पुराणा य्ये च नूतना"ऽइति य्येऽत्र स्थ सनातना य्ये चाधुनातनाऽइत्येतत् ॥२॥ "अदाद्यमो[5]ऽवसानं पृथिव्या" ऽइति । य्यमो ह वाऽअस्या[6]ऽअवसानस्येष्टे सऽएवास्माऽअस्यामवसानं ददाति[7] ॥३॥ "अक्रन्निमं[8] पितरो लोकमस्मा"ऽइति । क्षत्रं वै य्यमो व्विशः पितरो य्यस्माऽउ वै क्षत्रियो व्विशा सँव्विदानोऽस्यामवसानं ददाति तत्सुदत्तं तथो हास्मै क्षत्रं य्यमो व्विशा पितृभिः सँव्विदानोऽस्यामवसानं ददाति ॥४॥ पलाशशाखया व्युदूहति । ब्रह्म वै पलाशो ब्रह्मणैव तदवसितान्व्युदूहति मन्त्रेण ब्रह्म वै मन्त्रो ब्रह्मणैव तदवसितान्व्यु-

---

१. व्युद्वहति । अस्य इति ख, ग, ङ, ञ. २. मा. सं. १२. ४५.

३. इति इति. ङ, इति इति. ञ. ४, ५. मा. सं. १२. ४५.

६. अस्या इति. ङ. ७. ददाति इति. ख, ङ, ञ. ८. मा. सं. १२. ४५.

ते तामुदीचीमुदस्यति ॥५॥ (शतम् ३९००) अथोषान्निवपति ।
वै लोको गार्हपत्यः पशवऽऊषाऽअस्मिंस्तल्लोके पशून्दधाति
ादिमेऽस्मिँल्लोके पशवः ॥६॥ यद्वेवोषान्निवपति । प्रजापतिः
ऽअसृजत ता नानोल्बाऽअसृजत ता न समजानत सोऽकाम-
सञ्जानीरन्निति ताः समानोल्वाऽअकरोत्तासामूषानुल्बमकरोत्ताः
ज्ञानत तस्मादप्येतर्हि समानोल्बाः समेव जानते देवैः समानो-
ःसानीत्यु वै यजते यो यजते तद्यदूषान्निवपति देवैरेव तत्स-
ोल्बो भवति ॥७॥ "संज्ञानमसी"ति । समजानत ह्येतेन "कामे-
ा"मिति पशवो वाऽऊषाः पशवः कामधरणं "मयि ते काम-
ं भूयादि"ति मयि ते पशवो भूयासुरित्येतत्तैः सर्व्वं गार्हप-
प्रच्छादयति योनिर्व्वै गार्हपत्या चितिरुल्बमूषाः सर्व्वां तद्यो-
ल्बेन प्रच्छादयति ॥८॥ अथ सिकता निवपति । अग्नेरेतद्वै-
ारस्य भस्म यत्सिकताऽअग्निमु वाऽएतं वैश्वानरं चेष्यन्भ-
न वाऽअग्निः स्वं भस्मातिदहत्यनतिदाहाय ॥९॥ यद्वेव
कता निवपति । अग्नेरेतद्वैश्वानरस्य रेतो यत्सिकताऽअग्निमु
एतं वैश्वानरं चेष्यन्भवति न वाऽअरेतस्कात्किं चन विक्रि-
ऽस्माद्रेतसोऽधि विक्रियाताऽइति ॥१०॥ "अग्नेर्भस्मास्यग्नेः
षमसी"ति । यातयाम वाऽअग्नेर्भस्मायातयाम्न्यः सिकताऽ
तयाममेवैनदेतत्करोति ताभिः सर्व्वं गार्हपत्यं प्रच्छादयति
निर्व्वै गार्हपत्या चिती रेतः सिकताः सर्व्वस्यां तद्योनौ रेतो
ाति ॥११॥ अथैनं परिश्रिद्भिः परिश्रयति । योनिर्व्वै परिश्रितऽ
ैवैतद्रेतः सिक्तं योन्या परिगृह्णाति तस्माद्योन्या रेतः सिक्तं
गृह्यते ॥१२॥ यद्वेवैनं परिश्रिद्भिः परिश्रयति । अयं वै लोको
पत्यऽआपः परिश्रितऽइमं तँल्लोकमद्भिः परितनोति समुद्रेण
तत्परितनोति सर्व्वतस्तस्मादिमं लोकँ सर्व्वतः समुद्रः

१, २. मा. सं. १२. ४६.  ३. प्रच्छादयति इति. ङ, ञ.
४. मा. सं. १२. ४६.  ५. दधाति इति. ख,ङ,ञ.  ६. तं लोकमिति. ग,ङ,ट.

पर्य्येति दक्षिणावृत्तस्मादिमं लोकं दक्षिणावृत्समुद्रः पर्य्येति खाते तस्मादिमं लोकं खातेन समुद्रः पर्य्येति ॥१३॥ "चितं स्थे"ति[1] चिनोति ह्येनाः "परिचित स्थे"ति[2] परि ह्येनाश्चिनो"त्यूर्द्ध्वचित[3] श्रयध्वमि"त्यूर्द्ध्वाऽउपदधदाह तस्मादूर्द्ध्वऽएव समुद्रो विजतेऽथ यत्तिरश्चीरुपदध्यात्सक्षद्वैवेदꣳ सर्व्वꣳ समुद्रो निर्मृज्यान्न[4] साद यत्यसन्ना ह्यापो न सूददोहसाधिवदति[5] ॥१४॥ अस्थीनि वै परिश्रितः । प्राणः सूददोहा न वाऽअस्थिषु प्राणोऽस्त्येकेन यजुष बह्वीरिष्टकाऽउपदधात्येकꣳ ह्येतद्रूपं यदापोऽथ यद्बह्वयः परिश्रितो भवन्ति बह्व्यो ह्यापः ॥१५॥ तद्वै योनिः परिश्रितः उल्बमूषा रेतः सिकता बाह्याः परिश्रितो भवन्त्यन्तरऽऊषा बाह्य हि योनिरन्तरमुल्बं बाह्यऽऊषा भवन्त्यन्तराः सिकता बाह्यꣳ ह्युल्बमन्तरꣳरेतऽएतेभ्यो वै जायमानो जायते तेभ्यऽएवैनमेतज्जनयति[6] ॥१६॥ अथैनमताश्चिनोति । इदमेवैतद्रेतः सिक्तं विकरोति तस्माद्योनौ रेतः सिक्तं विक्रियते ॥१७॥ स चतस्रः प्राचीरुपदधाति । द्वे पश्चात्तिरश्च्यौ द्वे पुरस्तात्तद्याश्चतस्रः प्राचीरुपदधाति सऽआत्मा तद्यत्ताश्चतस्रो भवन्ति चतुर्विधो ह्ययमात्माथ ये पश्चात्ते सक्थ्यौ ये पुरस्तात्तौ बाहू यत्र वाऽआत्मा तदेव शिरः ॥१८॥ तं वाऽएतम्[7] । अत्र पक्षपुच्छवन्तं विकरोति यादृग्वै योनौ रेतो विक्रियते तादृग्जायते तद्यदेतमत्र पक्षपुच्छवन्तं विकरोति तस्मादेषोऽमुत्र पक्षपुच्छवान्जायते ॥१९॥ तं वै पक्षपुच्छवन्तमेव सन्तम् । न पक्षपुच्छवन्तमिव पश्यन्ति तस्माद्योनौ गर्भं न यथारूपं पश्यन्त्यथैनममुत्र पक्षपुच्छवन्तं पश्यन्ति तस्माज्जातं गर्भं यथारूपं पश्यन्ति ॥२०॥ स चतस्रः पूर्व्वाऽउपदधाति । आत्मा ह्येवाग्रे सम्भवतः सम्भवति दक्षिणतऽउदङ्ङासीनऽउत्तराध्यां[8] प्रथमामुपदधाति तथो हास्यैषोऽभ्या-

१-३. मा. सं. १२. ४६. ४. निर्मृज्याद्वेति ग, ङ. ५. वदति इति ग,ङ,ज. ६. जनयति इति. ख. ७. एतम् इति. ख. ८. उदङ्ङासीन इति ग.

वाग्निश्चितो भवति ॥२१॥ "अयᳲसोऽअग्निः । यस्मिन्त्सो-न्द्रः सुतं दध"ऽइत्ययं वै लोको गार्हपत्यऽआपः सोमः सुतोऽस्तल्लोकेऽपऽइन्द्रोऽधत्त "जठरे व्वावशान"ऽइति मध्यं वैᳲ"सहस्रियं व्वाजमत्यं न सप्तिमि"त्यापो वै सहस्रियो व्वाजः सवान्त्सन्त्स्तूयसे जातवेद"ऽइति चितः संश्चीयसे जातवेदऽतत् ॥२२॥ "अग्ने यत्ते दिवि व्वर्च्च"ऽइति । आदित्यो वाऽअ-दिवि व्वर्च्चः पृथिव्यामित्ययमग्निः "पृथिव्यां यदोषधीष्वप्स्वा-त्रे"ति यऽएवौषधिषु चाप्सु चाग्निस्तमेतदाह "येनान्तरि-व्वाततन्थे"ति व्वायुः स "त्वेषः स भानुरर्णवो नृचक्षा" ते महान्त्स भानुरर्णवो नृचक्षाऽइत्येतत् ॥२३॥ "अग्ने दिवोऽमच्छा जिगासी"ति । आपो वाऽअस्य दिवोर्ण्णस्ताऽएत्र धूमे-छैत्य"च्छा देवाँ २॥ ऽऊचिषे धिष्ण्या ये"ऽइति प्राणा वै देवा यास्ते हि सर्व्वा धियऽइष्णन्ति "या रोचने परस्तात्सूर्यस्य श्चावस्तादुपतिष्ठन्तऽआप" ऽइति रोचनो ह नामैष लोको षऽएतत्तपति तद्याश्चैतं परेणापो याश्चावरेण ताऽएतदाह ॥२४॥ ीष्यासोऽअग्नय"ऽइति । पशव्यासोऽग्नयऽइत्येतत् "प्रा-भेः सजोषस"ऽइति प्रायणरूपं प्रायणᳲ ह्येतदग्नेर्यद्गार्हपत्यो न्तां यज्ञमद्रुहोऽनमीवाऽइषो महीरि"ति जुषन्तां यज्ञमद्रुहोऽतायाऽइषो महीरित्येतत् ॥२५॥ नानोपदधाति । ये नाना-ऽआत्मंस्तांस्तद्दधाति सकृत्सादयत्येकं तदात्मानं करोति ोहसाधिवदति प्राणो वै सूददोहाः प्राणेनैवैनमेतत्सन्त-सं दधाति ॥२६॥ अथ जघनेन परीत्य । उत्तरतो दक्षि-नोऽपरयोर्द्दक्षिणामग्रऽउपदधाती "डामग्ने पुरुदᳲसᳲ सनि"ति पशवो वाऽइडा पशूनामेवास्माऽएतामाशिषमाशा-

१–४. मा. सं. १२.४७. ५–८. मा. सं. १२. ४८. ९. मा. सं. १२. ४९.
१०. जिगासीति इति. ख, ङ, ञ, ट. ११, १२. मा. सं. १२. ४९.
१३–१५. मा. सं. १२. ५०. १६, मा. सं. १२. ५१.

स्ते "[1]शश्वत्तमꣳ हवमानाय साधे"ति यजमानो वै हवमानः "[2]स्यान्नः सूनुस्तनयो विजावे"ति प्रजा वै सूनु"[3]रग्ने सा ते सुमतिर्भूत्वस्मे" इत्याशिषमाशास्ते ॥२७॥ अथोत्तराम् । "[4]अयं ते योनिर्ऋत्वियो यतो जातोऽअरोचथा"ऽइत्ययं ते योनिर्ऋतव्यः सनातनो यतो जातोऽदीप्यथाऽइत्येत"[5]त्तं जानन्नग्नऽआरोहाथा नो [6]वर्द्धया रयिमि"ति यथैव यजुस्तथा बन्धुः ॥२८॥ सक्थ्यावस्यैते । ते नानोपदधाति नाना सादयति नाना सूददोहसाधिवदति नाना हीमे सक्थ्यौ द्वे भवतो द्वे हीमे सक्थ्यौ पश्चादुपदधाति पश्चाद्धीमे सक्थ्यावग्राभ्याꣳसꣳस्पृष्टे भवतऽएवꣳ हीमे सक्थ्यावग्राभ्याꣳ सꣳ स्पृष्टे ॥२९॥ अथ तेनैव पुनः परीत्य । दक्षिणतऽउदङ्ङासीनः पूर्व्वयोरुत्तरामग्रऽउपदधाति "[7]चिदसि तया देवतयाङ्गिरस्वद् ध्रुवा सीदे"त्यथ दक्षिणां "[8]परिचिदसि तया देवतयाङ्गिरस्वद् ध्रुवा सीदे"ति ॥३०॥ बाहूऽअस्यैते । ते नानोपदधाति नाना सादयति नाना सूददोहसाधिवदति नाना हीमौ बाहू द्वे भवतो द्वौ हीमौ बाहू पूर्व्वार्द्धऽउपदधाति पुरस्ताद्धीमौ बाहूऽअग्राभ्याꣳ सꣳ स्पृष्टे भवतऽएवꣳ हीमौ बाहूऽअग्राभ्याꣳ सꣳ स्पृष्टौ स वाऽइतीमाऽउपदधातीतीमेऽइतीमे तद्दक्षिणावृत्तद्धि देवत्रा ॥३१॥ अष्टाविष्टकाऽउपदधाति । अष्टाक्षरा गायत्री गायत्रोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावन्तमेवैनमेतच्चिनोति पञ्चकृत्वः सादयति पञ्चचितिकोऽग्निः पञ्चर्त्तवः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावन्तमेवैनमेतच्चिनोत्यष्टाविष्टकाः पञ्च कृत्वः सादयति तत्त्रयोदश त्रयोदश मासाः संवत्सरस्त्रयोदशाग्नेश्चितिपुरीषाणि यावानग्निर्यावत्यस्य मात्रा तावत्तद्[9]भवति ॥३२॥ अथ लोकम्पृणामुपदधाति । तस्याऽउपरि बन्धु-

---

१–३. मा. सं. १२. ५१. ४, ५. मा. सं. १२. ५२. ६. वर्धया इति. ग, ङ.
७, ८. मा. सं. १२. ५३. ९. भवति । अथ इति.

पूर्व्वांस्त्रिवृदग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावन्तमेवैनमेत-
ो दशोत्तरास्तासामुपरि बन्धुर्द्वे वाग्रे[1]ऽथ दशाथैकामेवछं
ा चिन्वन्ति तास्त्रयोदश सम्पद्यन्ते तस्योक्तो बन्धुः ॥३३॥
यऽएकविंछंशतिः सम्पद्यन्ते । द्वादश मासाः पञ्चर्त्तव-
। लोकाऽअसावादित्यऽएकविंᳪशोऽमुं तदादित्यमस्मि-
तेष्ठापयति[2] ॥३४॥ एकविंछंशतिर्व्वेव परिश्रितः । द्वादश
पञ्चर्त्तवस्त्रयऽइमे लोकाऽअयमग्निरमुतोऽध्येकविंᳪशाऽइमं
ष्मिन्नादित्ये प्रतिष्ठापयति तद्यदेताऽएवमुपदधात्येतावेवै-
न्यास्मिन्प्रातिष्ठापयाति तावेतावन्योन्यस्मिन्प्रतिष्ठितौ[3] तौ
त्र द्वावेकविंछंशौ सम्पादयत्यत्र ह्येवेमौ तदोभौ भवतऽ-
यश्च गार्हपत्यश्च[4] ॥३५॥ अथ पूरीषं निवपाति । तस्योपरि
ात्वालवेलाया ऽआहरत्यग्निरेष यच्चात्वालस्तथो ह्यास्यैत-
। भवति सा समम्बिला स्यात्तस्योक्तो बन्धुः ॥३६॥ व्याम-
त्रति । व्याममात्रो वै पुरुषः पुरुषः प्रजापतिः प्रजापतिरग्नि-
तां तद्योनिं करोति परिमण्डला भवति परिमण्डला हि
ोऽअयं वै लोको गार्हपत्यः परिमण्डलऽउ वाऽअयं लोकः
थैनौ सन्निवपति । संज्ञामेवाभ्यामेतत्करोति "समितछं
छं" "सं वां मनाछंसि सं व्रता" "अग्ने त्वं पुरीष्यो" "भ-
मनसावि"ति शमयत्येवैनावेतदहिंछंसायै यथा नान्यो-
छंस्याताम् ॥३८॥ चतुर्भिः सन्निवपति । तद्ये चतुष्पदाः
वाभ्यामेतत्संज्ञां करोत्यथोऽअन्नं वै पशवोऽन्नेनैवाभ्यामेत-
रोति ॥३९॥ तां न रिक्तामवेक्षेत । नेद्रिक्तामवेक्षाऽइति
वेक्षेत ग्रसेत हैनम् ॥४०॥ अथास्याछं सिकता ऽआवपति ।
वानरस्य रेतो यत्सिकताऽ अग्निमेवास्यामेतद्वैश्वानरछं

---

वाऽअग्रे इति. ग.  २. प्रतिष्ठापयति इति. ख, ग, ङ, अ.
तेष्ठितौ ग, ङ.  ४. गार्हपत्यश्च इति. ख, ग, ङ, अ.
ाक इति. ख, ग, ङ, अ. ६–९. मा. सं. इति. १२. ५७–६०.

रेतोभूतꣳ सिञ्चति सा समम्बिला स्यात्तस्योक्तो बन्धुः ॥४१॥ अथैनां विमुञ्चति । अप्रदाहाय यद्धि युक्तं न विमुच्यते प्र तद्दह्यतऽएतद्वाऽएतद्युक्ता रेतोऽभार्षीदेतमग्निं तमत्राजीजनदथापरं धत्ते योषा वाऽउखा तस्माद्यदा योषा पूर्वꣳ रेतः प्रजनयत्यथापरं धत्ते ॥४२॥ "मातेव पुत्रं पृथिवी पुरीष्यमि"ति । मातेव पुत्रं पृथिवी पशव्यमित्येतद"ग्निꣳ स्वे योनावभारुखे"त्यग्निꣳ स्वे योनावभार्षीदुखेत्येत"त्तां विश्वैर्देवैर्ऋतुभिः संविदानः प्रजापतिर्विश्वकर्मा विमुञ्चत्वि"त्यृतवो वै विश्वे देवास्तदेनां विश्वैर्देवैर्ऋतुभिः संविदानः प्रजापतिर्विश्वकर्मा विमुञ्चति तामुत्तरतोऽग्नेर्निदधात्यरत्निमात्रे तस्योक्तो बन्धुः ॥४३॥ अथास्यां पयऽआनयति । एतद्वाऽएतद्रेतो धत्तेऽथ पयो धत्ते योषा वाऽउखा तस्माद्यदा योषा रेतो धत्तेऽथ पयो धत्तेऽधराः सिकता भवन्त्युत्तरं पयोऽधरꣳ हि रेतऽउत्तरं पयस्तन्मध्यऽआनयति यथा तत्प्रति पुरुषशीर्षमुपदध्यात् ॥ ४४ ॥ Cf. का. श. ८. ८. २; तै. सं. ५. २. ३, ४; मै. सं ३. २. ३; कठ. २०. १. कपि.* ३१. ३.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे सप्तमकाण्डे प्रथमप्रपाठके प्रथमं ब्राह्मणम् ॥ ( अ. १. १. )

### ७. १. २.

प्रजापतिः प्रजाऽअसृजत । स प्रजाः सृष्ट्वा सर्वमाजिमित्वा व्यस्रꣳसत तस्माद्विस्रस्तात्प्राणो मध्यत ऽउदक्रामदथास्माद्वीर्यमुदक्रामत्तस्मिन्नुत्क्रान्तेऽपद्यत तस्मात्पन्नादन्नमस्रवद्यच्चक्षुरध्यशेत तस्मादस्यान्नमस्रवन्नो हैह तर्हि का चन प्रतिष्ठास ॥१॥ ते देवा ऽअब्रु-

---

१. विमुञ्चति इति. ख, ग, ङ, ञ. २-४. मा सं. १२. ६१.

५. उपदध्यात् इति. ग.

*. मुद्रितकपिष्ठलसंहिता पुस्तकेऽध्यायोऽयं एकत्रिंशत्तमत्वेन संख्यातः । श्रेडर महोदयेन तु ३०.तमत्वेन परिगणितः ।

ः । न वाऽइतोऽन्या प्रतिष्ठास्तीममेव पितरं प्रजापतिꣳ संस्कर-
म सैव नः प्रतिष्ठा भविष्यतीति ॥२॥ तेऽग्निमब्रुवन् । न वाऽइतो-
' प्रतिष्ठास्ति त्वयीमं पितरं प्रजापतिꣳसंस्करवाम सैव नः
ष्ठा भविष्यतीति किं मे ततो भविष्यतीति ॥३॥ तेऽब्रुवन् ।
ा वाऽअयं प्रजापतिस्त्वन्मुखा ऽएतदन्नमदाम त्वन्मुखानां न ऽए-
न्नमसदिति तथेति तस्माद्देवा ऽअग्निमुखा ऽअन्नमदन्ति यस्यै
कस्यै च देवतायै जुह्वत्यग्नावेव जुह्वत्यग्निमुखा हि तद्देवा ऽअ-
कुर्व्वत ॥४॥ स योऽस्मात्प्राणो मध्यत ऽउदक्रामत् । अयमेव
वायुर्योऽयं पवतेऽथ यदस्माद्धीर्षमुदक्रामदसौ स ऽआदित्यो-
यदस्मादन्नमस्रवद्यदेव संवत्सरेऽन्नं तत्तत्[1] ॥५॥ तं देवा ऽअ-
प्रावृञ्जन् । तद्य ऽएनं प्रवृक्तमग्निरारोहद्य ऽएवास्मात्स प्राणो
यत ऽउदक्रामत्स ऽएवैनꣳ स ऽआपद्यत तमस्मिन्नदधुरथ यद-
माद्धीर्षमुदक्रामत्तदस्मिन्नदधुरथ यदस्मादन्नमस्रवत्तदस्मिन्नदधु-
ꣳ सर्व्वं कृत्स्नꣳ संस्कृत्योर्द्ध्वमुदश्रयंस्तद्यं तमुदश्रयन्निमे स
काः ॥६॥ तस्यायमेव लोकः प्रतिष्ठा[2] । अथ योऽस्मिंल्लोकेऽग्निः
ऽस्यावाङ् प्राणोऽथास्यान्तरिक्षमात्माथ योऽन्तरिक्षे वायुर्य्य ऽए-
ात्मन्प्राणः सोऽस्य स द्यौरेवास्य शिरः सूर्याचन्द्रमसौ चक्षुषी
चक्षुरध्यशेत स चन्द्रमास्तस्मात्स मीलिततरोऽन्नꣳ हि तस्मा-
वत् ॥७॥ तदेषा वै सा प्रतिष्ठा । यां तद्देवाः समस्कुर्व्वंस्तैवे-
द्यापि प्रतिष्ठा सोऽप्येवाप्यॆतो[3]ऽधि भविता ॥८॥ स यः स प्रजा-
र्व्यस्रꣳसत । अयमेव स योऽयमग्निश्चीयते[4] तद्यदेषोखा रिक्ता शेते
प्रवर्जनाद्यथैव तत्प्रजापतिरुत्क्रान्ते प्राणऽउत्क्रान्ते वीर्यें स्रुते-
रिक्तोऽशयदेतस्य तद्रूपम् ॥९॥ तामग्नौ प्रवृणक्ति । यथैवैन-
देवाः प्रावृञ्जंस्तद्य ऽएनां प्रवृक्तामग्निरारोहति य ऽएवास्मा-
प्राणो मध्यत ऽउदक्रामत्स ऽएवैनꣳ स ऽआपद्यते तमस्मिन्द-

१. तत्तत् इति. ग.  २. प्रतिष्ठा इति. ग, ख, ङ, ञ.
३. प्यतो इति. ङ.  ४. चीयते इति. ङ.

धात्यथ यद्रुक्मं प्रतिमुच्य बिभर्त्ति यदेवास्माद्वीर्यमुदक्रामत्तदस्मि
न्दधात्यथ याः समिध ऽआदधाति यदेवास्मादन्नमस्रवत्तदस्मि
न्दधाति ॥ १० ॥

( अर्द्धप्रपाठकः ५४ )

ता वै सायं प्रातरादधाति । अहश्च हि तद्रात्रेश्चान्नमस्रवत्ता
न्येतानि सर्वस्मिन्नेव संवत्सरे स्युः संवत्सरो हि स प्रजापतिर्यस्मा
त्तान्युदक्रामंस्तदस्मिन्नेतत्सर्वस्मिन्नेव सर्वं दधाति यस्मिन्हास्यै
तदतो न कुर्यान्न हास्य तस्मिन्नेतद्दध्यान्नासंवत्सरभृतस्यैक्षकेण च
न भवितव्यमिति ह स्माह श्यामकक्षायणो नेदिमं पितरं प्रजापतिं
विच्छिद्यमानं पश्यानीति तᳲ संवत्सरे सर्वं कृत्स्नᳲ संस्कृत्योर्ध्वं
मुच्छ्रयति यथैवैनमदो देवा ऽउदश्रयन् ॥११॥ तस्य गार्हपत्यऽ
एवायँल्लोकः[1] । अथ यो गार्हपत्येऽग्निर्यऽएवायमस्मिँल्लोकेऽग्निः
सोऽस्य सोऽथ यदन्तराहवनीयं च गार्हपत्यं च तदन्तरिक्षमथ
यऽआग्नीध्रीयेऽग्निर्यऽएवायमन्तरिक्षे वायुः सोऽस्य सऽआहव
नीयऽएव द्यौरथ यऽआहवनीयेऽग्निस्तौ सूर्याचन्द्रमसौ सोऽस्यै
षऽआत्मैव ॥१२॥ तस्य शिरऽएवाहवनीयः[2] । अथ यऽआहव
नीयेऽग्निर्यऽएवायᳲ शीर्षन्प्राणः सोऽस्य स तद्यत्स पक्षपुच्छवा
न्भवति पक्षपुच्छवान्ह्ययᳲ शीर्षन्प्राणश्चक्षुः शिरो[3] दक्षिणᳲ श्रोत्रं
दक्षिणः पक्षऽउत्तरᳲ श्रोत्रमुत्तरः पक्षः प्राणो मध्यमात्मा वाक्पु
च्छं प्रतिष्ठा तद्यत्प्राणा वाचान्नं जग्ध्वा प्रतितिष्ठन्ति तस्मात्प्रा[4]
णानां वाक्पुच्छं प्रतिष्ठा ॥१३॥ अथ यदन्तराहवनीयं च गार्ह
पत्यं च । सऽआत्माथ यऽआग्नीध्रीयेऽग्निर्यऽएवायमन्तरात्म
न्प्राणः सोऽस्य स प्रतिष्ठैवास्य गार्हपत्योऽथ यो गार्हपत्येऽग्निः
सोऽस्यावाङ् प्राणः ॥१४॥ तं हैके त्रिचितं चिन्वन्ति । त्रयो

---

1. लोक इति. ग, ख, ङ, ज. 2. आहवनीय इति. ग, ख, ङ, ज.
3. शिरो इति. ग, ङ, 4. तस्माद्वाक्पुच्छं इति. ग, ङ.

ऽइमेऽवाञ्चः प्राणाऽइति न तथा कुर्यादिति ते रेचयन्त्येकविꣳश-
म्पदमथोऽअनुष्टुप्सम्पदमथो बृहतीसम्पदं[1] ये तथा कुर्वन्त्ये-
ꣳ ह्येवैतद्रूपं योनिरेव प्रजातिरेव यदेतेऽवाञ्चः प्राणा यद्धि
त्रं करोति यत्पुरीषं प्रैव तज्जायते ॥१५॥ अथातः सम्पदेव[2]।
कविꣳशतिरिष्टका नव यजूꣳषि तत्त्रिꣳशत्सादनं च सूददोहाश्च
द्द्वात्रिꣳशद्द्वात्रिꣳशदक्षरानुष्टुप्सैषानुष्टुप् ॥१६॥ एकविꣳशति-
त्रैव परिश्रितः। यजुर्द्वाविꣳशं व्युदूहनस्य यजुरूषाश्च यजुश्च सि-
ताश्च यजुश्च पुरीषं च यजुश्च चतुर्भिः सन्निवपति विमुञ्चति
श्चमेन ततस्त्रिभिरियं द्वात्रिꣳशदक्षरानुष्टुप्सैषानुष्टुप् ॥१७॥ अथैते
यजुषी। सोऽअनुष्टुबेव वाग्वाऽअनुष्टुप्तद्यदिदं द्वयं वाचो
पं दैवं च मानुषं चोच्चैश्च शनैश्च तदेते द्वे ॥१८॥ ता वाऽएता-
तस्रोऽनुष्टुभः। चितऽएष गार्हपत्यस्तद्यदेताऽअत्र तिस्रोऽनुष्टुभः
म्पादयन्त्यत्र ह्येवेमे तदा सर्व्वे लोका भवन्ति ततोऽन्यतरां
ात्रिꣳशदक्षरामनुष्टुभमाहवनीयꣳ हरन्ति सऽआहवनीयः सा
ौस्तच्छिरोऽथेहान्यतरा परिशिष्यते स गार्हपत्यः सा प्रतिष्ठा
ऽउऽअयँल्लोकः[3] ॥१९॥ अथ येऽएते द्वे यजुषी। एतत्तद्यदन्तरा-
वनीयं च गार्हपत्यं च तदन्तरिक्षꣳ सऽआत्मा तद्यत्ते द्वे भवत-
तस्मादेतत्तनीयो यदन्तराहवनीयं च गार्हपत्यं च तस्मादेषाँल्लोका-
ामन्तरिक्षलोकस्तनिष्ठः॥२०॥सैषा त्रेधाविहिता वागनुष्टुप्। तामे
ोऽग्निः प्राणो भूत्वानुसञ्चरति यऽआहवनीयेऽग्निः स प्राणः सो-
सावादित्योऽथ यऽआग्नीध्रीयेऽग्निः स व्यानः सऽउऽअयं वायु-
ोऽयं पवतेऽथ यो गार्हपत्येऽग्निः सऽउदानः सऽउऽअयं यो-
यमस्मिँल्लोकेऽग्निरेवं विद्वा वाव सर्व्वां वाचं सर्व्वं प्राणꣳ सर्व्व-
ात्मानꣳ संस्कुरुते ॥२१॥ सैषा बृहत्येव। ये वै द्वे द्वात्रिꣳशतौ

१. सम्पदं इति. ग,ङ.	२. सम्पदेव इति. ग, ख, ङ, ञ.

३. लोकः इति. ग, ङ, ञ.

द्वात्रिꣳशदेव तद्यैते द्वे यजुषी तच्चतुस्त्रिꣳशदग्निरेव पञ्चत्रिꣳ
नाक्षराच्छन्दो व्येत्येकस्मान्न द्वाभ्याꣳ स उ द्व्यक्षरस्तत्षट्त्रि
शत्षट्त्रिꣳशदक्षरा बृहती बृहतीं वाऽएष सञ्चितोऽभिसम्पद्यते य
दृग्वै योनौ रेतः सिच्यते तादृग्जायते तद्यदेतामत्र बृहतीं करो
तस्मादेष सञ्चितो बृहतीमभिसम्पद्यते ॥२२॥ तदाहुः । यय
लोको गार्हपत्योऽन्तरिक्षं धिष्णया द्यौराहवनीयोऽन्तरिक्षलोकः
ऽअस्माल्लोकादनन्तर्हितोऽथ कस्माद्गार्हपत्यं चित्वाहवनीयं चिन
त्यथ धिष्ण्यानिति सह हैवेमावग्रे लोकावासतुस्तयोर्वियतोर्यो
रेणाकाश ऽआसीत्तदन्तरिक्षमभवदीक्षꣳ हैतन्नाम ततः पुरान्तः
वाऽइदमीक्षमभूदिति तस्मादन्तरिक्षं तद्यद्गार्हपत्यं चित्वाहवनी
चिनोत्येतौ ह्यग्रे लोकावसृज्येतामथ प्रत्येत्य धिष्ण्यान्निवपति कर्म्म
ऽएवानन्तरयायाथोऽअन्तयोर्वाव संस्क्रियमाणयोर्मध्यꣳ संस्क्रिय
॥२३॥ Cf. का. श. ८. ८. ३; तै. सं. ५. २. ४; मै. सं. ३. २
४; कठ. २०. २; कपि ३१. ४.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे सप्तमकाण्डे
प्रथमप्रपाठके द्वितीयं ब्राह्मणम्॥ (अ. .१. २. )

( इति प्रथमोऽध्यायः )

७. १. ३.

अथातो नैर्ऋतीर्हरन्ति । एतद्वै देवा गार्हपत्यं चित्वा समारो
हन्नयं वै लोको गार्हपत्यऽइममेव तँल्लोकꣳ संस्कृत्य समारोहं
स्ते तमऽएवानतिदृश्यमपश्यन् ॥१॥ तेऽब्रुवन् । उप तज्जानीत
यथेदं तमः पाप्मानमपहनामहाऽइति तेऽब्रुवंश्चेतयध्वमिति चितिं
मिच्छतेति वाव तदब्रुवंस्तदिच्छत यथेदं तमः पाप्मानमपहनाम-
हाऽइति ॥२॥ ते चेतयमानाः । एता ऽइष्टका ऽअपश्यन्नैर्ऋतीस्ता

---

१. तस्मादिति क.

उपादधत ताभिस्तत्तमः पाप्मानमपाघ्नत पाप्मा वै निर्ऋतिस्त-
देताभिः पाप्मानं निर्ऋतिमपाघ्नत तस्मादेता नैर्ऋत्यः ॥३॥ तद्वा-
एतत्क्रियते । यद्देवाऽअकुर्वन्निदं नु तत्तमः स पाप्मा देवैरेवा-
हतो यत्त्वेतत्करोति यद्देवा ऽअकुर्वंस्तत्करवाणीत्यथो यऽएव
ाप्मा या निर्ऋतिस्तमेताभिरपहते तद्यदेताभिः पाप्मानं निर्ऋति-
पहते तस्मादेता नैर्ऋत्यः ॥४॥ यद्वेवैता नैर्ऋतीर्हरन्ति । प्रजापतिं
विस्रस्तं यत्र देवाः समस्कुर्वंस्तमुखायां योनौ रेतोभूतमसिञ्च-
ोनिर्वाऽउखा तस्माऽएताᳬं संवत्सरे प्रतिष्ठाᳬंसमस्कुर्वन्निममेव
ोकमयं वै लोको गार्हपत्यस्तस्मिन्नेनं प्राजनयंस्तस्य यः पाप्मा
ः श्लेष्मा यदुल्बं यज्जरायु तदस्यैताभिरपाघ्नंस्तद्यदस्यैताभिः
ाप्मानं निर्ऋतिमपाघ्नंस्तस्मादेता नैर्ऋत्यः ॥५॥ तथैवैतद्यजमानः ।
ात्मानमुखायां योनौ रेतोभूतᳬं सिञ्चति योनिर्वाऽउखा
स्माऽएताᳬं संवत्सरे प्रतिष्ठाᳬं संस्करोतीममेव लोकमयं वै
ोको गार्हपत्यस्तस्मिन्नेनं प्रजनयति तस्य यः पाप्मा यः श्लेष्मा
यदुल्बं यज्जरायु तदस्यैताभिरपहन्ति तद्यदस्यैताभिः पाप्मानं नि-
र्ऋतिमपहन्ति[1] तस्मादेता नैर्ऋत्यः ॥६॥ पादमात्र्यो भवन्ति । अध-
पदमेव तत्पाप्मानं निर्ऋतिं कुरुतेऽलक्षणा भवन्ति यद्वै नास्ति
दलक्षणमसन्तमेव तत्पाप्मानं निर्ऋतिं कुरुते तुषपक्वा भवन्ति
र्ऋता वै तुषा नैर्ऋतैरेव तन्नैर्ऋतं कर्म करोति कृष्णा भवन्ति
ृष्णᳬं हि तत्तमऽआसीदथो कृष्णा वै निर्ऋतिः ॥७॥ ताभिरेतां
िशं यन्ति । एषा वै नैर्ऋती दिङ्नैर्ऋत्यामेव तद्दिशि[2] निर्ऋतिं
धाति स यत्र स्वकृतं वेरिणᳬं श्वभ्रप्रदरो वा स्यात्तदेना ऽउ-
दध्याद्यत्र वाऽअस्याऽअवदीर्यते यत्र वास्याऽओषधयो न जायन्ते
िर्ऋतिर्हास्यैतद्गृह्णाति नैर्ऋतऽएव तद्भूमेर्निर्ऋतिं दधाति ताः

---

१. अवहन्ति इति. ग, ङ, २. तद्दिशि इति. ग, ख, ङ, ञ.

पराचीर्लोकभाजः कृत्वापदधाति[1] ॥८॥ "असुन्वन्तमयजमानमिच्छे"-ति । यो वै न सुनोति न यजते तं निर्ऋतिर्ऋच्छति "स्तेनस्ये-त्यामन्विहि तस्करस्ये"ति स्तेनस्य चेत्यामन्विहि तस्करस्य चेत्येत-द्यथो यथा स्तेनस्तस्करः प्रलायमेत्येवं प्रलायमिहीत्य"न्यमस्मदिच्छ सा त"ऽइत्येत्यन्विच्छं विद्वाꣳसमिच्छेत्येत"न्नमो देवि निर्ऋते तुभ्यमस्त्वि"ति नमस्कारेणैवैनामपह्नुते ॥९॥ "नमः सु ते निर्ऋते तिग्मतेज"ऽइति । तिग्मतेजा वै निर्ऋतिस्तस्या ऽएतन्नमस्करो"त्य-यस्मयं विचृता बंधमेतमि"त्ययस्मयेन ह वै तं बन्धेन निर्ऋतिर्ब-ध्नाति यं बध्नाति "यमेन त्वं यम्या संविदाने"त्यग्निर्वै यमऽ-इयं यम्याभ्याꣳ हीदꣳ सर्वं यतमाभ्यां त्वꣳ संविदानेत्येत"दु-त्तमे नाकेऽअधि रोहयैनमि"ति स्वर्गो वै लोको नाकः स्वर्गे लोके यजमानमधिरोहयेत्येतत् ॥१०॥ "यस्यास्ते घोरऽआसञ्जुहोमी"ति । घोरा वै निर्ऋतिस्तस्याऽएतदासञ्जुहोति यत्तद्देवत्यं कर्म्म करो"त्ये-षां बन्धानामवसर्जनाये"ति यैर्बन्धैर्बद्धो भवति"यां त्वा जनो भूमिरिति प्रमन्दत"ऽइतीयं वै भूमिरस्यां वै स भवति यो भवति "निर्ऋतिं त्वाहं परिवेद विश्वत"ऽइति निर्ऋतिरिति त्वाहं परि-वेद सर्व्वत ऽइत्येतदियं वै निर्ऋतिरियं वै तं निरर्पयति यो निर्ऋ-च्छति तद्यथा वै ब्रूयादसावामुष्यायणोऽसि वेद त्वा मा मा हिꣳ-सीरित्येवमेतदाह नतराꣳ हि विदितऽआमन्त्रितो हिनस्ति ॥११॥ नोपस्पृशति । पाप्मा वै निर्ऋतिर्नेत्पाप्मना सꣳस्पृशाऽइति न सादयति प्रतिष्ठा वै सादनं नेत्पाप्मानं प्रतिष्ठापयानीति न सूददो-हसाधिवदति प्राणो वै सूददोहा नेत्पाप्मानं प्राणेन सन्तनवानि सन्दधानीति ॥१२॥ ता हैके परस्तादर्व्वाचीरुपदधति । पाप्मा वै निर्ऋतिर्नेत्पाप्मानं निर्ऋतिमन्ववायामेति न तथा कुर्यात्पराचीरेवो-पदध्यात्पराञ्चमेव तत्पाप्मानं निर्ऋतिमपहते ॥१३॥ तिस्रऽइष्टका

१. दधाति. इति. ग, ङ. २–५. मा सं. १२. ६२.
६–९. मा. सं. १२.६३. १०–१३. मा. सं. १२.६४. १४. निर्ऋतिरिति. ङ.

दधाति। त्रिवृदग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैव तत्पाप्मानं
ऋतिमपहते[1] ॥१४॥ अथासन्दीं शिक्यं। रुक्मपाशमिण्ड्वे तत्प-
न्यस्यति नैर्ऋतो वै पाशो निर्ऋतिपाशादेव तत्प्रमुच्यते "यं[2] ते
निर्ऋतिराबबन्ध पाशं ग्रीवास्वविचृत्यमि"त्यनेवंविदुषा ह्यविचृ-
"तं ते[3] विष्यास्यायुषो न मध्यादि"त्यग्निर्व्वाऽआयुस्तस्यैतन्मध्यं
तो गार्हपत्यो भवत्यचितऽआहवनीयस्तस्माद्यदि स्युवाग्नि
ते यदि स्थविर ऽआयुषो न मध्यादित्येवाह "थैतं[4] पितुमद्धि
त" ऽइत्यन्नं वै पितुरथैतदन्नमद्धि प्रमुक्तऽइत्येतत्त्रिष्टुब्भिर्व्वज्रो
त्रिष्टुब्वज्रेणैव तत्पाप्मानं निर्ऋतिमपहते ॥१५॥ तिस्रऽइष्टका
न्ति। आसन्दी शिक्यं रुक्मपाशऽइण्ड्वे तदष्टावष्टाक्षरा गायत्री
त्रोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैव तत्पाप्मानं निर्ऋतिम-
ते ॥१६॥ अथान्तरेणोदचमसं निनयति। व्वज्रो वाऽआपो व्वज्रे-
तत्पाप्मानं निर्ऋतिमन्तर्द्धत्ते "नमो[6] भूत्यै येदं चकारे"त्युपो-
ष्ठन्ति भूत्यै वाऽएतदग्रे देवाः कर्म्माकुर्व्वत तस्याऽएतन्नमोऽकु-
भूत्याऽउऽएवायमेतत्कर्म कुरुते तस्याऽएतन्नमस्करोत्यप्रतीक्षमाय-
प्रतीक्षमेव तत्पाप्मानं निर्ऋतिं जहति ॥१७॥ प्रत्येत्याग्निमुपति-
। एतद्वाऽएतदयथायथं करोति यदग्नौ सामिचितऽएतां दिशं-
ि तस्माऽएवैतन्निहनुतेऽहिंसायै ॥१८॥ यद्वेवोपतिष्ठते। अयं
लोको गार्हपत्यः प्रतिष्ठा वै गार्हपत्यऽइयमु वै प्रतिष्ठाथैतदपथ-
ति यदेतां दिशमेति[8] तद्यदुपतिष्ठतऽइमामेवैतत्प्रतिष्ठामभि प्रत्यै-
स्यामेवैतत्प्रतिष्ठायां प्रतितिष्ठति ॥१९॥ "निवेशनः[9] संगमनो व्वसु-
ामि"ति। निवेशनो ह्ययं लोकः संगमनो व्वसूनां "विश्वा[10] रूपा-
चष्टे शचीभिरि"ति सर्व्वाणि रूपाण्यभिचष्टे शचीभिरित्येत "देवे[11]

१. मपहते इति. ख. २-४, ७. मा. सं. १२. ६५. ५. इत्येतदिति. ग, ङ.
६. वै इति. ग, ङ. ८. दिशमेतीति. ङ. ९-११. मा. सं. १२. ६६.

ऽइव सविता सत्यधर्म्मेन्द्रो न तस्थौ समरे पथीनामि''ति यथैव यजुस्तथा बन्धुः ॥२०॥ Cf. का. श. ९. १. १; तै. सं. ५. २. ४; मै. सं. ३. २. ४; कठ. सं. २०. २; कपि. सं. ३१. ४.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे सप्तमकाण्डे
प्रथमप्रपाठके तृतीयं ब्राह्मणम् ॥ (अ. २. १.)

७. १. ४.

( प्रायणीयेष्टिः भूकर्षणं च )

अथ प्रायणीयं निर्व्वपति । तस्य हविष्कृता व्वाचं व्विसृजते व्वाचं व्विसृज्य स्तम्बयजुर्हरति स्तम्बयजुर्हृत्वा पूर्व्वेण परिग्ग्रहेण परिगृह्य लिखित्वाह हर त्रिरिति हरति त्रिराग्नीध्रः ॥१॥ प्रत्येत्य प्रायणीयेन प्रचरति । प्रायणीयेन प्रचर्य सीरं युनक्त्येतद्वाऽएनं देवाः संस्करिष्यन्तः पुरस्तादन्नेन समार्द्धयंस्तथैवैनमयमेतत्संस्करिष्यन् पुरस्तादन्नेन समर्द्धयति सीरं भवति सेरᳬहैतद्यत्सीरमिरामेवास्मिन्नेतद्दधाति ॥२॥ औदुम्बरं भवति । ऊर्ग्वै रस ऽउदुम्बर ऽऊर्ज्जैवैनमेतद्रसेन समर्द्धयति मौञ्जं परिसार्यं त्रिवृत्तस्योक्तो बन्धुः ॥३॥ सोऽग्नेर्द्दक्षिणाᳬ श्रोणिम् । जघनेन तिष्ठन्नुत्तरस्याᳬसस्य पुरस्ताद्युज्यमानमभिमन्त्रयते "सीरा युञ्जन्ति कवयो युगा व्वितन्वते पृथगि''ति ये व्विद्वाᳬसस्ते कवयस्ते सीरं च युञ्जन्ति युगानि च व्वितन्वते पृथ"ग्धीरा देवेषु सुम्नये''ति यज्ञो वै सुम्नं धीरा देवेषु यज्ञं तन्वानाऽइत्येतत् ॥४॥ "युनक्त सीरा व्वि युगा तनुध्वमि''ति । युञ्जन्ति हि सीरं व्वि युगानि तन्वन्ति "कृते योनौ व्वपतेह बीजमि''ति बीजाय वाऽएषा योनिष्क्रियते यत्सीता यथा ह वाऽअयोनौ रेतः सिञ्चेदेवं तद्यदकृष्टे व्वपति "गिरा च श्रुष्टिः सभरा ऽअसन्न''ऽइति व्वाग्वै गीरन्नᳬ श्रुष्टि"र्नेदीयऽइत्सृण्यः

१. बन्धुः इति. ग. २, ३. मा. सं. १२. ६७ ४–७. मा. सं. १२. ६८

मेयादि''ति यदा वाऽअन्नं पच्यतेऽथ तत्स्रुण्योपचरन्ति द्वाभ्यां
नक्ति गायत्र्या च त्रिष्टुभा च तस्योक्तो बन्धुः ॥५॥ स दक्षिणमे-
रे व्युनक्ति । अथ सव्यमेवं देवत्रेतरथा मानुषे षड्गवं भवति द्वाद-
वं वा चतुर्विंशतिगवं वा संवत्सरमेवाभिसम्पदम् ॥६॥ अथैनं
कृषति । अन्नं वै कृषिरेतद्वाऽअस्मिन्देवाः संस्करिष्यन्तः पुरस्ता-
नमदधुस्तथैवास्मिन्नयमेतत्संस्करिष्यन्पुरस्तादन्नं दधाति[1] ॥७॥ स
ऽआत्मानमेव विकृषति । न पक्षपुच्छान्यात्मंस्तदन्नं दधाति
दु वाऽआत्मन्नन्नं धीयते तदात्मानमवति तत्पक्षपुच्छान्यथ[2] यत्प-
पुच्छेषु नैव तदात्मानमवति[3] न पक्षपुच्छानि ॥८॥ स दक्षिणार्द्धे-[4]
ग्नेः । अन्तरेण परिश्रितः प्राचीं प्रथमाᳬ सीतां कृषति ''शुनᳬ[5]
फाला विकृषन्तु भूमिᳬ शुनं कीनाशाऽअभियन्तु वाहैरि''ति
नᳬ शुनमिति यद्वै समृद्धं तच्छुनᳬ समर्द्धयत्येवैनामेतत्[6] ॥९॥
थ जघनार्द्धेनोदीचीम् । ''घृतेन[7] सीता मधुना समज्यतामि''ति
थैव यजुस्तथा बन्धु''र्विश्वैर्देवैरनुमता मरुद्भिरि''ति विश्वे च
देवा मरुतश्च वर्षस्येशत''ऽऊर्ज्जस्वती पयसा पिन्वमाने''ति
ो वै पय ऽऊर्ज्जस्वती रसेनान्नेन पिन्वमानेत्येत''दस्मान्त्सीते
पसाभ्याववृत्स्वे''त्यस्मान्त्सीते रसेनाभ्याववृत्स्वेत्येतत्॥१०॥ अथो-
राद्धेन प्राचीम् । ''लाङ्गलं[11] पवीरवदि''ति लाङ्गलᳬ रयिमदित्ये-
''त्सुशेवᳬ[12] सोमपित्सर्वि''त्यन्नं वै सोम''स्तदुद्वपति[13] गामविं प्र-
र्व्यं च पीवरीं प्रस्थावद्रथवाहनामि''त्येतद्धि सर्वᳬ सीतोद्वपति
११॥ अथ पूर्वार्द्धेन दक्षिणा[14] । ''कामं[15] कामदुघे धुक्ष्व मित्राय
रुणाय च । इन्द्रायाश्विभ्यां पूष्णे प्रजाभ्यऽओषधीभ्य'' ऽइति
र्वदेवत्या वै कृषिरेताभ्यो देवताभ्यः सर्वान् कामान्धुक्ष्वेत्येतदित्यग्रे

१. दधाति इति. च. २. तत्पक्ष इति. ग, ङ. ३. भवति इति. ग, ङ.
४. दक्षिणार्द्धेनाग्नेः इति. च. ५. मा. सं. १२. ६९ ६. मेतत् इति. च.
७–१० मा सं. १२. ७०. ११–१३. मा. सं. १२. ७१.
१४. दक्षिणाम् इति ग. १५. मा. सं. १२. ७२.

कृषत्यथेति। अथेत्यथेति तद्दक्षिणावृत्तद्धि देवत्रा ॥१२॥ चतस्रः सीता य्यजुषा कृषति। तद्यच्चतसृषु दिक्ष्वन्नं तदस्मिन्नेतद्दधाति तद्वै य्यजुषाद्धा वै तद्यद्यजुरद्धो तद्यदिमा दिशः ॥१३॥ अथात्मानं व्विकृषति। तद्यदेव संवत्सरेऽन्नं तदस्मिन्नेतद्दधाति तूष्णीमनिरुक्तं वै तद्यत्तूष्णीᳪं सर्व्वं वाऽअनिरुक्तᳬं सर्व्वेणैवास्मिन्नेतदन्नं दधातीत्यग्रे कृषत्यथेति। अथेत्यथेति तद्दक्षिणावृत्तद्धि देवत्रा ॥१४॥ तिस्रस्तिस्रः सीताः कृषति। त्रिवृदग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवास्मिन्नेतदन्नं दधाति ॥१५॥ द्वादश सीतास्तूष्णीं कृषति। द्वादश मासाः संवत्सरः संवत्सरोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवास्मिन्नेतदन्नं दधाति ॥१६॥ ताऽउभय्यः षोडश सम्पद्यन्ते। षोडशकलः प्रजापतिः प्रजापतिरग्निरात्मसम्मितमेवास्मिन्नेतदन्नं दधाति य्यद्वु वाऽआत्मसम्मितमन्नं तदवति तन्न हिनस्ति यद्भूयो हिनस्ति तद्यत्कनीयो न तदवति ॥१७॥ य्यद्वेवैनं व्विकृषति। एतद्वाऽअस्मिन्देवाः संस्करिष्यन्तः पुरस्तात्प्राणानदधुस्तथैवास्मिन्नयमेतत्संस्करिष्यन्पुरस्तात्प्राणान्दधाति लेखा भवन्ति लेखासु हीमे प्राणाः ॥१८॥ ( शतम् ४००० ) चतस्रः सीता य्यजुषा कृषति। तद्यऽइमे शीर्षंश्चत्वारो निरुक्ताः प्राणास्तानस्मिन्नेतद्दधाति तद्वै य्यजुषाद्धा वै तद्यद्यजुरद्धो तद्यदिमे शीर्षन्प्राणाः ॥१९॥ य्यद्वेवात्मानं व्विकृषति। य्यऽएवेमेऽन्तरात्मन्प्राणास्तानस्मिन्नेतद्दधाति तूष्णीं को हि तद्वेद य्यावन्त ऽइमेन्तरात्मन्प्राणाः ॥२०॥ अथैनान्विमुञ्चति। आप्त्वा तं कामं य्यस्मै कामायैनान्युङ्क्ते "व्विमुच्यध्वमघ्न्या" ऽइत्यघ्न्या ह्येते देवत्रा "देवयाना" ऽइति दैवᳬं ह्येभिः कर्म करोत्य"गन्म तमसस्पारमस्ये"त्यशनाया वै तमो ऽगन्मास्याऽअशनायायै पारमित्येत"ज्ज्योतिरापामे"ति ज्योतिर्ह्याप्नोति य्यो देवान्यो यज्ञमथैनानुदीचः प्राचः प्रसृजति तस्योक्तो बन्धुस्तानध्व-

---

१. देवत्र इति च. २. दिश इति. ग, ख, ङ, अ. ३-६. मा. सं. १२. ७३.

र्थ्युवे ददाति स हि तैः करोति तांस्तु दक्षिणानां कालेऽनुदिशेत् ॥२१॥ Cf. का. श. ९. १. २; तै. सं. ५. २. ५; मै. सं. ३. २. ५. कठ. सं. २०. ३; कपि. सं. ३२. ५.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे सप्तमकाण्डे
प्रथमप्रपाठके चतुर्थं ब्राह्मणम् ॥ ( अ.२.२. )

( प्रथमः प्रपाठकस्समाप्तः ॥ )

( कण्डिकासंख्या १०८ )

## अथ द्वितीयः प्रपाठकः

### ७. २. १.

ॐ अथ दर्भस्तम्बमुपदधाति । एतद्वै देवाऽ ओषधीरुपादधत तथैवैतद्यजमान ऽओषधीरुपधत्ते ॥१॥ यद्वेव दर्भस्तम्बमुपदधाति । जायतऽएवऽएतद्यच्चीयते सऽएष सर्व्वस्माऽअन्नाय जायतऽउभयम्वेतदन्नं यद्दर्भाऽआपश्च ह्येताऽओषधयश्च या वै वृत्राद्बीभत्समानाऽआपो धन्व दभन्त्यऽउदायंस्ते दर्भाऽअभवन्यद्दभन्त्यऽउदायंस्तस्माद्दर्भास्ता हैताः शुद्धा मेध्याऽआपो वृत्राभिप्रक्षरिता यद्दर्भा यदु दर्भास्तेनौषधय ऽउभयेनैवैनमेतदन्नेन प्रीणाति ॥२॥ सीतासमरे[1] । वाग्वै सीतासमरः प्राणा वै सीतास्तासामयँ समयो वाचि वै प्राणेभ्योऽन्नं धीयते मध्यतो मध्यतऽएवास्मिन्नेतदन्नं दधाति तूष्णीमनिरुक्तं वै तद्यत्तूष्णीँ सर्व्वं वाऽअनिरुक्तँ सर्व्वेणैवास्मिन्नेतदन्नं[2] दधाति ॥३॥ अथैनमभिजुहोति । जायतऽएवऽएतद्यच्चीयते सऽएष सर्व्वस्माऽअन्नाय जायते सर्व्वस्योऽअस्यैष रसो यदाज्यमपाञ्च ह्येषऽओषधीनां च रसोऽस्यैवैनमेतत्सर्व्वस्य रसेन प्रीणाति यावान्नु वै रसस्तावानात्मानेनैवैनमेतत्सर्व्वेण प्रीणाति पञ्चगृहीतेन पञ्चचितिकोऽग्निः पञ्चर्त्तवः संवत्सरः संवत्सरोऽ-

---

१. समरे इति. ग. २. दन्नो दधाति इति. ग, ङ.

ग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन [1]प्रीणाति ॥४॥ व्यद्धैवैनमभिजुहोति । एतद्वै व्यत्रैतं प्राणा ऽऋषयोऽग्रेऽग्निᳯ समस्कुर्व्वंस्तदस्मिन्नेतं पुरस्ताद्भागमकुर्व्वत तस्मात्पुरस्ताद्भागास्तद्यदभिजुहोति व्य ऽएवास्मिंस्ते प्राणाऽऋषयः पुरस्ताद्भागमकुर्व्वत तानेवैतत्प्रीणात्याज्येन पञ्चगृहीतेन तस्योक्तो बन्धुः ॥५॥ व्यद्धैवैनमभिजुहोति । एतद्वै व्यान्येतस्मिन्नग्नौ रूपाण्युपधास्यन्भवति' सास्तोमान्यानि पृष्ठानि व्यानि छन्दाᳯसि तेभ्य ऽएतं पुरस्ताद्भागं करोति तान्येवैतत्प्रीणात्याज्येन पञ्चगृहीतेन तस्योक्तो बन्धुः ॥६॥ व्यद्धैवैनमभिजुहोति । एतद्वै देवा ऽ अबिभयुर्द्दीर्घं वा ऽइदं कर्म्म यद्वै न ऽइममिह रक्षाᳯसि नाष्ट्रा न हन्युरिति त ऽएतामेतस्य कर्म्मणः पुरस्तात्सᳯस्थामपश्यंस्तमत्रैव सर्व्वᳯसमस्थापयन्नत्राचिन्वंस्तथैवैनमयमेतदत्रैव सर्व्वᳯ सᳯस्थापयत्यत्र चिनोति ॥७॥ "सजूरब्द[2]" ऽइति चितिः । "अयवोभिरि[3]"ति पुरीषᳯ "सजूरुषा[4]" ऽइति चितिर"रुणीभिरि[5]"ति पुरीषᳯ "सजोषसावश्विने[6]"ति चिति"र्दᳯसोभिरि[7]"ति पुरीषᳯ"सजूः सूर[8]"ऽइति चिति"रेतशेने[9]"ति पुरीषᳯ "सजूर्व्वैश्वानर[10]"ऽइति चिति"रिडये[11]"ति पुरीषं "घृतेने[12]"ति चितिः "स्वे[13]"ति पुरीषᳯ "[14]हे"ति चितिः ॥८॥ त्रयोदशैता व्याहृतयो भवन्ति । त्रयोदश मासाः संवत्सरस्त्रयोदशाग्नेश्चितिपुरीषाणि व्यावानग्निर्य्यावत्यस्य मात्रा तावन्तमेवैनमेतच्चिनोत्याज्येन जुहोत्यग्निरेष यदाज्यमग्निमेवैतच्चिनोति पञ्चगृहीतेन पञ्चचितिकोऽग्निः पञ्चर्त्तवः संवत्सरः संवत्सरोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावन्तमेवैनमेतच्चिनोत्यूर्ध्वामुद्गृह्णञ्जुहोत्यूर्ध्वं तदग्निं चितिभिश्चिनोति ॥९॥

Cf. का. श. ९. १. ३.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे सप्तमकाण्डे
द्वितीयप्रपाठके प्रथमं ब्राह्मणम् ॥ (अ. २. ३.)

---

१. प्रीणाति इति च. २–१३. मा. सं. १२. ७४.

## ७. २. २.

### ( कृष्टेऽपान्निनयनम् )

अथोदचमसान्निनयति । एतद्वै देवा ऽअब्रुवंश्चेतयध्वमिति चितिमिच्छतेति वाव तदब्रुवंस्ते चेतयमाना व्वृष्टिमेव चितिमपश्यंस्तामस्मिन्नदधुस्तथैवास्मिन्नयमेतद्दधाति ॥१॥ उदचमसा भवन्ति[1] । आपो वै व्वृष्टिर्व्वृष्टिमेवास्मिन्नेतद्दधात्यौदुम्बरेण चमसेन तस्योक्तो बन्धुश्चतुःस्रक्तिना चतस्रो वै दिशः सर्व्वाभ्य ऽएवास्मिन्नेतद्दिग्भ्यो व्वृष्टिं दधाति॥२॥त्रींस्त्रीनुदचमसान्निनयति । त्रिवृदग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवास्मिन्नेतद्वृष्टिं दधाति ॥३॥ द्वादशोदचमसान् कृष्टे निनयति । द्वादश मासाः संवत्सरः संवत्सरोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवास्मिन्नेतद्वृष्टिं दधाति ॥४॥ स वै कृष्टे निनयति । तस्मात्कृष्टाय व्वर्षति स यत्कृष्टऽएव निनयेन्नाकृष्टे कृष्टायैव व्वर्षेन्नाकृष्टायाथ यदकृष्टऽएव निनयेन्न कृष्टेऽकृष्टायैव व्वर्षेन्न कृष्टाय कृष्टे चाकृष्टे च निनयति तस्मात्कृष्टाय चाकृष्टाय च व्वर्षति ॥५॥ त्रीन्कृष्टे चाकृष्टे च निनयति । त्रिवृदग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवास्मिन्नेतद्वृष्टिं दधाति ॥६॥ यद्वेवोदचमसान्निनयति । एतद्वाऽअस्मिन्देवाः संस्करिष्यन्तः पुरस्तादपो दधुस्तथैवास्मिन्नयमेतत्संकरिष्यन्पुरस्तादपो दधाति ॥७॥ त्रींस्त्रीनुदचमसान्निनयति । त्रिवृदग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवास्मिन्नेतदपो दधाति ॥८॥ द्वादशोदचमसान्कृष्टे निनयति । द्वादश मासाः संवत्सरः संवत्सरोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवास्मिन्नेतदपो दधाति ॥९॥ स वै कृष्टे निनयति । प्राणेषु तदपो दधाति स यत्कृष्टऽएव निनयेन्नाकृष्टे प्राणेष्वेवापः[2] स्युर्न्नैतरस्मिन्नात्मन्नथ यदकृष्टऽएव निनयेन्न कृष्टेऽआत्मन्नेवापः स्युर्न्न प्राणेषु कृष्टे चाकृष्टे च निनयति तस्मादिमाऽउभयत्रापः प्राणेषु चात्मंश्च ॥१०॥ त्रीन्कृष्टे

१. भवन्ति  २. वापः इति. ङ.

चाकृष्टे च निनयति । त्रिवृदग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवास्मिन्नेतदपो दधाति ॥११॥ पञ्चदशोदचमसान्निनयति । पञ्चदशो वै व्वज्रऽएतेनैवास्यैतत्पञ्चदशेन व्वज्रेण सर्व्वं पाप्मानमपहन्ति ॥१२॥ अथ सर्व्वौषधं व्वपति । एतद्वै देवाऽअब्रुवंश्चेतयध्वमिति चितिमिच्छतेति वाव तदब्रुवंस्ते चेतयमानाऽअन्नमेव चितिमपश्यंस्तामस्मिन्नदधुस्तथैवास्मिन्नयमेतद्दधाति ॥१३॥ सर्व्वौषधं भवति । सर्व्वमेतदन्नं य्यत्सर्व्वौषधᳬं सर्व्वमेवास्मिन्नेतदन्नं दधाति तेषामेकमन्नमुद्धरेत्तस्य नाश्नीयाद्यावज्जीवमौदुम्बरेण चमसेन तस्योक्तो बन्धुश्चतुःस्रक्तिना चतस्रो वै दिशः सर्व्वाभ्यऽएवास्मिन्नेतद्दिग्भ्योऽन्नं दधात्यनुष्टुब्भिर्व्वपति व्वाग्वाऽअनुष्टुब्वाचो वाऽअन्नमद्यते ॥१४॥ तिसृभिस्तिसृभिर्ऋग्भिर्व्वपति । त्रिवृदग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवास्मिन्नेतदन्नं दधाति ॥१५॥ द्वादशभिर्ऋग्भिः कृष्टे व्वपति । द्वादश मासाः संवत्सरः संवत्सरोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवास्मिन्नेतदन्नं दधाति ॥१६॥ स वै कृष्टे व्वपति । तस्मात्कृष्टेऽन्नं पच्यते स[3] य्यत्कृष्टऽएव व्वपेन्नाकृष्टे कृष्टऽएवान्नं पच्येत नाकृष्टेऽथ य्यदकृष्टऽएव व्वपेन्न कृष्टेऽकृष्टऽएवान्नं पच्येत न कृष्टे कृष्टे चाकृष्टे च व्वपति तस्मात्कृष्टे चाकृष्टे चान्नं पच्यते ॥१७॥ तिसृभिः कृष्टे चाकृष्टे च व्वपति । त्रिवृदग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवास्मिन्नेतदन्नं दधाति ॥१८॥ य्यद्वेव सर्व्वौषधं व्वपति । एतद्वाऽएनं देवाः संस्करिष्यन्तः पुरस्तात्सर्व्वेण भेषजेनाभिषज्यंस्तथैवैनमयमेतत्संकरिष्यन्पुरस्तात्सर्व्वेण भेषजेन भिषज्यति ॥१९॥ सर्व्वौषधं भवति । सर्व्वमेतद्भेषजं य्यत्सर्व्वौषधᳬं सर्व्वेणैवैनमेतद्भेषजेन भिषज्यति ॥२०॥ तिसृभिस्तिसृभिर्ऋग्भिर्व्वपति । त्रिवृदग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा ता-

---

१. हन्ति इति. च. २. जीवमौदुम्बरेण इति. ग, ङ. ३. स इति. नास्ति. ग, ङ.
४. कृष्ट इति. ग, ञ. ५. एतद्वा इति. ङ.

तैवैनमेतद्भिषज्यति ॥२१॥ द्वादशाभिर्ऋग्भिः कृष्टे वपति । द्वाद-
। मासाः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा ता-
तैवेनमेतद्भिषज्यति ॥२२॥ स वै कृष्टे वपति । प्राणांस्तद्भिष-
यति स यत्कृष्टऽएव वपेन्नाकृष्टे प्राणानेव भिषज्येन्नेतरमात्मानमथ
यदकृष्टऽएव वपेन्न कृष्ट ऽआत्मानमेव भिषज्येन्न प्राणान्कृष्टे चाकृष्टे
च वपति प्राणांश्च तदात्मानं च भिषज्यति ॥२३॥ तिसृभिः कृष्टे
ाकृष्टे च वपति । त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवै-
मेतद्भिषज्यति ॥२४॥ पञ्चदशोदचमसान्निनयति । पञ्चदशाभिर्ऋ-
ग्भिर्वपति तत्त्रिꣳशत्त्रिꣳशदक्षरा विराड्विराडु कृत्स्नमन्नꣳ
सर्वमेवास्मिन्नेतत्कृत्स्नमन्नं दधाति ॥२५॥ "याऽओषधीः पूर्वा
ाताः । देवेभ्यस्त्रियुगं पुरे"त्यृतवो वै देवास्तेभ्य ऽएतास्त्रिः पुरा
ायन्ते वसन्ता प्रावृषि शरदि "मनै नु बभ्रूणामहमि"ति सोमो
 बभ्रुः सौम्याऽओषधय ऽऔषधः पुरुषः "शतं धामानी"ति
यदिदꣳ शतायुः शतार्द्धः शतवीर्यऽएतानि हास्य तानि शतं धा-
ानि "सप्त चे"ति यऽएवेमे सप्त शीर्षन्प्राणास्तानेतदाह ॥२६॥
'शतं वोऽअम्ब धामानि । सहस्रमुत वो रुह"ऽइति यदिदꣳ
ातधा च सहस्रधा च विरूढाऽ"अधा शतक्रत्वो यूयमिमं मेऽ-
गदं कृते"ति यमिमं भिषज्यामीत्येतत् ॥२७॥ ताऽएता ऽएक-
याख्यानाः । एतमेवाभि यथैतमेव भिषज्येदेतं पारयेत्ता ऽअनुष्टुभो
वन्ति वाग्वा ऽनुष्टुब्वागु सर्वं भेषजꣳ सर्वेणैवेनमेतद्भेषजेन
भेषज्यति ॥२८॥ अथातो निरुक्तानिरुक्तानामेव । यजुषा द्वावन-
ड्वाहौ युनक्ति तूष्णीमितरान्यजुषा चतस्रः सीताः कृषति तूष्णी-
मेतरास्तूष्णीं दर्भस्तम्बमुपदधाति यजुषाभिजुहोति तूष्णीमुदचम-
सान्निनयति यजुषा वपति ॥२९॥ प्रजापतिरेषोऽग्निः । उभयम्वे-

१-४. मा. सं. १२. ७५. ५, ६. मा. सं. १२. ७६. ७. भिषज्येदिति. ग, ङ.
८. तूष्णीमिति. ग. ९. जुहोति. इति. ङ.

तत्प्रजापतिर्निरुक्तश्चानिरुक्तश्च परिमितश्चापरिमितश्च तद्यद्यजुषा करोति य्यदेवास्य निरुक्तं परिमितꣳ रूपं तदस्य तेन संस्करोत्यथ यत्तूष्णीं यदेवास्यानिरुक्तमपरिमितꣳरूपं तदस्य तेन संस्करोति स ह वाऽएतꣳ सर्व्वं कृत्स्नं[1] प्रजापतिꣳ संस्करोति य्यऽएवं विद्वानेतदेवं करोति बाह्यानि रूपाणि निरुक्तानि भवन्त्यन्तराण्यनिरुक्तानि पशुरेष य्यदग्निस्तस्मात्पशोर्बाह्यानि रूपाणि निरुक्तानि भवन्त्यन्तराण्यनिरुक्तानि ॥३०॥ Cf. का. श. ९. १. ४; तै. सं. ५. २. ५; मै. सं ३. २. ५; कठ. सं. २०. ३.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे सप्तमकाण्डे द्वितीयप्रपाठके द्वितीयं ब्राह्मणम् ॥ (अ. २. ४.)

( द्वितीयोऽध्यायः )

७. २. ३.

( सोमक्रयणादि )

चितो गार्हपत्यो भवति[2] । अचित ऽआहवनीयो[3]ऽथ राजानं क्रीणात्ययं वै लोको गार्हपत्यो द्यौराहवनीयोऽथ य्योऽयं व्वायुः पवतऽएष सोमऽएतं तदिमौ लोकावन्तरेण दधाति तस्मादेषऽइमौ लोकावन्तरेण पवते ॥१॥ य्यद्वेव चिते गार्हपत्ये[4] । अचितऽआहवनीयेऽथ राजानं क्रीणात्यात्मा वाऽग्निः प्राणः सोमऽआत्मंस्तत्प्राणं मध्यतो दधाति तस्मादयमात्मन्प्राणो मध्यतः ॥२॥ य्यद्वेव चिते गार्हपत्ये[5] । अचितऽआहवनीये[6]ऽथ राजानं क्रीणात्यात्मा वाऽअग्नी रसः सोमऽआत्मानं तद्रसेनानुषजति तस्मादयमान्तमेवात्मा रसेनानुषक्तः ॥३॥ राजानं क्रीत्वा पर्य्युह्य[7] । अथास्माऽआतिथ्यꣳ हविर्निर्व्वपति तस्य हविष्कृता व्वाचं व्विसृजतेऽथ वाऽएतद्व्यतिषजत्यध्वरकर्म्म चाग्नि-

---

१. कृत्स्नमिति ग. २. भवति इति. ख, ग, भवति इति. ङ. च

३. आहवनीयो इति. ग, ङ, ज. ४. ५. गार्हपत्ये इति. ङ, ज. च

६. आहवनीये इति च, ७. पर्युह्य इति. ग, ङ, ज; पर्युह्य । अथ इति, ख.

कर्म्म च कर्म्मणः समानतायै समानमिदं कर्म्मासदिति ॥४॥ यद्वेव
व्यतिषजति । आत्मा वाऽअग्निः प्राणोऽध्वरऽआत्मंस्तत्प्राणं मध्यतो
दधाति तस्मादयमात्मन्प्राणो मध्यतः ॥५॥ यद्वेव व्यतिषजति ।
आत्मा वाऽअग्नी रसोऽध्वरऽ आत्मानं तद्रसेनानुषजति तस्मादय-
मान्तमेवात्मा रसेनानुषक्तोऽथाहवनीयस्यार्द्धमैति ॥६॥ तद्वैके ।
उभयत्रैव पलाशशाखया व्युदूहन्त्युभयत्र वै चिनोतीति न तथा
कुर्यादवस्यति वाव गार्हपत्येनोर्ध्वऽएवाहवनीयेन रोहति तस्मात्तथा
न कुर्यात् ॥७॥ अथ गार्हपत्यऽ एवोषान्निवपति । नाहवनीयेऽयं
वै लोको गार्हपत्यः पशवऽऊषा ऽअस्मिंस्तल्लोके पशून्दधाति तस्मा-
दिमेऽस्मिंल्लोके पशवः ॥८॥ अथाहवनीयऽएव पुष्करपर्णमुपद-
धाति । न गार्हपत्यऽआपो वै पुष्करपर्णं द्यौराहवनीयो दिवि तदपो
दधात्युभयत्र सिकता निवपति रेतो वै सिकताऽउभयत्र वै विक्रि-
यते तस्माद्रेतसोऽधि विक्रियाता ऽइति ॥९॥ ता नाना मन्त्राभ्यां
निवपति । मनुष्यलोको वै गार्हपत्यो देवलोक ऽआहवनीयो नानो
वाऽएतद्यद्दैवञ्च मानुषञ्च द्राघीयसा मन्त्रेणाहवनीये निवपति ह्रसी-
यसा गार्हपत्ये द्राघीयो हि देवायुषꣳ ह्रसीयो मनुष्यायुषꣳ स
पूर्व्वाः परिश्रिद्भ्यो गार्हपत्ये सिकता निवपति रेतो वै सिकताऽ
अस्माद्रेतसोऽधीमा विक्रियान्ता ऽइति ॥१०॥ तदाहुः । यद्योनिः
परिश्रितो रेतः सिकता ऽअथ पूर्व्वाः परिश्रिद्भ्यो गार्हपत्ये सिक-
ता निवपति कथमस्यै तद्रेतोऽपरासिक्तं परिगृहीतं भवतीत्युल्बं वाऽ
ऊषास्तद्यदूषान् पूर्व्वान्निवपत्येतेनो हास्यैतदुल्बेन रेतोऽपरासिक्तं परि-
गृहीतं भवत्यथाहवनीये परिश्रितोऽभिमन्त्रयते तस्योक्तो बन्धुरथ
सिकता निवपति रेतो वै सिकताऽएतयोऽअस्यैतद्योन्या रेतोऽप-
रासिक्तं परिगृहीतं भवति ॥११॥ अथाहवनीयऽएवाप्यानवतीभ्या-

---

१. वपति इति. ग. ङ,  २. पशव इति. ख, ग, ङ, ञ.

३. तस्मादिति ग, ङ.  ४. भवति. इति ख, ग, ङ, ञ.

मभिमृशति । न गार्हपत्ये ऽयं वै लोको गार्हपत्यः स्वर्गो लोकऽ आहवनीयोऽद्धो वाऽअयमस्मिँल्लोके जातो यजमानः स्वर्गऽएव लोके प्रजिजनयिषितव्यस्तद्यदाहवनीय ऽएवाप्यानवतीभ्यामभिमृशति न गार्हपत्ये स्वर्गऽएवैनं तल्लोके प्रजनयति ॥१२॥ अथ लोगेष्टका ऽउपदधाति । इमे वै लोकाऽएषोऽग्निर्दिशो लोगेष्टकाऽएषु तल्लोकेषु दिशो दधाति तस्मादिमाऽएषु लोकेषु दिशः ॥१३॥ वाह्येनाग्निमाहरति । आप्ता वाऽअस्य ता दिशो याऽएषु लोकेष्वथ याऽइमाँल्लोकान् परेण दिशस्ताऽअस्मिन्नेतद्दधाति ॥१४॥

( अर्द्धप्रपाठकः ५३ )

वहिर्व्वेदेरियं वै व्वेदिः । आप्ता वाऽअस्य ता दिशो याऽ अस्यामथ याऽइमां परेण दिशस्ता ऽअस्मिन्नेतद्दधाति ॥१५॥ यद्वेव लोगेष्टकाऽउपदधाति । प्रजापतेर्व्विस्रस्तस्य सर्व्वा दिशो रसोऽनु व्यक्षरत्तं यत्र देवाः समस्कुर्व्वंस्तदस्मिन्नेताभिर्लोगेष्टकाभिस्तꣳ रसमदधुस्तथैवास्मिन्नयमेतद्दधाति ॥१६॥ वाह्येनाग्निमाहरति । आप्तो वाऽअस्य स रसो य ऽएषु लोकेष्वथ यऽइमाँल्लोकान् पराङ्सोऽत्यक्षरत्तमस्मिन्नेतद्दधाति ॥१७॥ वहिर्व्वेदेरियं वै व्वेदिः । आप्तो वाऽ अस्य स रसोऽ योऽस्यामथ यऽइमां पराङ्सोऽत्यक्षरत्तमस्मिन्नेतद्दधाति ॥१८॥ स्पेयनाहरति । व्वज्रो वै स्फयो व्वीर्यं वै व्वज्रो व्वित्तिरियं व्वीर्येण वै व्विर्त्ति व्विन्दते ॥१९॥ स पुरस्तादाहरति । "मा मा हिꣳसीज्जनिता यः पृथिव्या" ऽइति प्रजापतिर्व्वै पृथिव्यै जनिता मा मा हिꣳसीत्प्रजापतिरित्येत"द्यो वा दिवꣳ सत्यधर्मा व्यानड्" इति यो वा दिवꣳ सत्यधर्मासृजतेत्येत"द्यश्चापश्चन्द्राः प्रथमो जजान" इति मनुष्या वाऽआपश्चन्द्रा यो मनुष्यान् प्रथमोऽसृजतेत्येत"त्कस्मै देवाय हविषा व्विधेमे"ति प्रजापतिर्व्वै कस्तस्मै हविषा व्विधेमेत्येतत्तामाहृत्यान्तरेण परिश्रित ऽआत्मन्नुपदधाति स

१. एषु. इति. ग, ङ. २–५. मा सं. १२. १०२.

यः प्राच्यां दिशि रसोऽत्यक्षरत्तमस्मिन्नेतद्दधात्यथो प्राचीमेवास्मिन्नेतद्दिशं दधाति ॥२०॥ अथ[1] दक्षिणतः । "अश्र्यावर्त्तस्व[2] पृथिवि यज्ञेन पयसा सहे"ति यथैव यजुस्तथा बन्धु"र्वपां[3] तेऽअग्निरिषितोऽअरोहदि"ति यद्वै किं चास्याᳬं सास्यै वपा तामग्निरिषितऽउपादीप्तो रोहति तामाहृत्यान्तरेण पक्षसन्धिमात्मन्नुपदधाति स यो दक्षिणायां दिशि रसोऽत्यक्षरत्तमस्मिन्नेतद्दधात्यथो दक्षिणामेवास्मिन्नेतद्दिशं [4]दधाति ॥२१॥ अथ पश्चात् । "अग्ने[5] यत्ते शुक्रं यच्चन्द्रं यत्पूतं यच्च यज्ञियमि"तीयं वाऽअग्निरस्यैतदाह "तद्देवेभ्यो[6] भरामसी"ति तदस्मै दैवाय कर्मणे हरामऽइत्येतत्तामाहृत्यान्तरेण पुच्छसन्धिमात्मन्नुपदधाति स यः प्रतीच्यां दिशि रसोऽत्यक्षरत्तमस्मिन्नेतद्दधात्यथो प्रतीचीमेवास्मिन्नेतद्दिशं दधाति स न सम्प्रति पश्चादाहरेन्नेद्यँ[7]ज्ञपथाद्रसमाहराणीतीतऽइवा[8]हरति ॥२२॥ अथोत्तरतः । "इषमूर्ज्जमहमित[9] ऽआद"मितीषमूर्ज्जमहमित ऽआददऽइत्येत"दृतस्य[10] योनिमि"ति सत्यं वाऽऋतᳬं सत्यस्य योनिमित्येत"न्महिषस्य[11] धारा"मित्यग्निर्वै महिषः स हीदं जातो महात्सर्वमैष्णा"दा[12] मा गोषु विशत्वा तनूष्वि"त्यात्मा वै तनूरा मा गोषु चात्मनि च विशत्वित्येत"ज्जहामि[13] सेदिम निराममी वामि"ति सिकताः प्रध्वᳬंसयति तथैव सेदिर्यानिरा यामीवा तामेतस्यां दिशि दधाति तस्मादेतस्यां दिशि प्रजाऽअशनायुकास्तामाहृत्यान्तरेण पक्षसन्धिमात्मन्नुपदधाति स यऽउदीच्यां दिशि रसोऽत्यक्षरत्तमस्मिन्नेतद्दधात्यथोऽउदीचीमेवास्मिन्नेतद्दिशं दधाति ॥२३॥ ता ऽएता दिशः । ताः सर्व्वत ऽउपदधाति सर्व्वतस्तद्दिशो दधाति तस्मात्सर्व्वतो दिशः सर्व्वतः समीचीः सर्व्वतस्तत्समीची-

---

१. अथ इति. ङ. २, ३. मा. सं. १२. १०३. ४. दधाति इति. ख, ग, ङ, ञ.
५, ६. मा. . १२. १०४. ७. यज्ञमिति. ग, ङ.
८. हरति इति ख, ग, ङ, ञ. ९–१३. मा सं. १२. १०५.

र्द्दिशो दधाति तस्मात्सर्व्वतः समीच्यो दिशस्ता नानोपदधाति नाना सादयति नाना सूददोहसाधिवदति नाना हि दिशस्तिष्ठन्नुपदधाति तिष्ठन्तीव हि दिशोऽथो तिष्ठन्वै व्वीर्यवत्तरः ॥२४॥ ताऽएता य्यजुष्मत्यऽइष्टकाः। ताऽआत्मन्नेवोपदधाति न पक्षपुच्छेष्वात्मन्ह्येव य्यजुष्मत्य ऽइष्टका उपधीयन्ते न पक्षपुच्छेषु ॥२५॥ तदाहुः। कथमस्यैताः पक्वाः शृता ऽउपहिता भवन्तीति रसो वाऽएताः स्वयᳬंशृत ऽउ वै रसो ऽथो यद्वै किं चैतमग्निं व्वैश्वानरमुपनिगच्छति ततऽएव तत्पक्वᳬं शृतमुपहितं भवति ॥२६॥ अथोत्तरवेदिं निवपति। इयं वै[१] व्वेदिर्द्यौरुत्तरवेदिर्द्दिशो[२] लोगेष्टकास्तद्यदन्तरेण व्वेदिं चोत्तरवेदिं च लोगेष्टकाऽउपदधातीमौ तल्लोकावन्तरेण दिशो दधाति तस्मादिमौ लोकावन्तरेण दिशस्तां य्युगमात्रीं वा सर्व्वतः करोति चत्वारिᳬंशत्पदां वा य्यतरथा[३] कामयेताथ सिकता निवपति तस्योक्तो बन्धुः ॥२७॥ ताऽउत्तरवेदौ निवपति। य्योनिर्व्वाऽउत्तरवेदिर्य्योनौ तद्रेतः सिञ्चति यद्वै य्योनौ रेतः सिच्यते तत्प्रजनिष्णु भवति ताभिः सर्व्वमात्मानं प्रच्छादयति सर्व्वस्मिंस्तदात्मन्रेतो दधाति तस्मात्सर्व्वस्मादेवात्मनो रेतः सम्भवति ॥२८॥ "अग्ने[४] तव श्रवो व्वय"ऽइति। धूमो वाऽअस्य श्रवो व्वयः स ह्येनममुष्मिँल्लोके श्रावयति "मँहि[५] भ्राजन्तेऽअर्च्चयो विभावसवि"ति महतो भ्राजन्तेऽर्च्चयः प्रभूवसवित्येत"द्बृहद्[६]भानो शवसा व्वाजमुक्थ्यमि"ति बलं वै शवो बृहद्भानो बलेनान्नमुक्थ्यमित्येत"द्दँ[७]धासि दाशुषे कव"ऽइति य्यजमानो वै दाश्वान्दधासि य्यजमानाय कवऽइत्येतत् ॥२९॥ "पावक[८]वर्च्चाः शुक्रवर्च्चाऽ"इति। पावकवर्च्चा ह्येष शुक्रवर्च्चाऽ"अनू[९]नवर्च्चाऽउदियर्षि भानुने"त्यनूनवर्च्चाऽउद्दीप्यसे भानुनेत्येत"[१०]त्पुत्रो मातरा विचरन्नुपावसी"ति पुत्रो ह्येष मातरा विचरन्नुपावति "पृ[११]णक्षि

१. वै वेदिः इति. ग, ङ. २. दिश इति ङ. ३. कामयेत इति. ङ.
४-७. मा. सं. १२. १०६. ८-११. मा. सं. १२. १०७

रोदसीऽउभे''ऽइतीमे वै द्यावापृथिवी रोदसी तेऽएष ऽउभे पृणाक्ति धूमेनामूं व्वृष्ट्येमाम् ॥३०॥ ''[1]ऊर्ज्जो न पाज्जातवेदः सुशस्तिभि''-रिति । ऊर्ज्जो न पाज्जातवेदः सुष्टुतिभिरित्येत''[2]न्मन्दस्व धीतिभि-र्हित''ऽइति दीप्यस्व धीतिभिर्हितऽइत्येत''[3]त्वेऽइषः संदधुर्भूरिवर्प-स''ऽइति त्वेऽइषः संदधुर्बहुवर्पसऽइत्येत''[4]च्चित्रोतयो व्वामजाता''ऽ-इति य्यथैव य्यजुस्तथा बन्धुः ॥३१॥ ''[5]इरेज्यन्नग्ने प्रथयस्व जन्तु-भि''रिति । मनुष्या वै जन्तवो दीप्यमानोऽग्ने प्रथस्व मनुष्यैरित्ये-त''[6]दस्मे रायोऽअमर्त्यें''त्यस्मे रयिं दधदमर्त्येत्येत''[7]त्सं दर्शतस्य व्वु-पुषो व्विराजसी''ति दर्शतस्य ह्येष व्वपुषो व्विराजति ''[8]पृणक्षि सानसिं क्रतुमि''ति पृणक्षि सनातनं क्रतुमित्येतत् ॥३२॥ ''[9]इष्कर्ता-रमध्वरस्य प्रचेतसमि''ति । अध्वरो वै यज्ञः प्रकल्पयितारं यज्ञस्य प्रचेतसमित्येत''[10]त्क्षयन्तꣳ राधसो मह''ऽइति क्षयन्तꣳ राधसि महतीत्येत''[11]द्राति व्वामस्य सुभगां महीमिषमि''ति [12]रातिं व्वामस्य सुभगां महतीमिषमित्येतद्''दधासि [13]सानसिꣳ रयिमि''ति दधासि सनातनꣳ रयिमित्येतत् ॥३३॥ ''[14]ऋतावानमि''ति । सत्यावान-मित्येत''[15]न्माहिषमि''त्यग्निर्वै माहिषो ''[16]व्विश्वदर्शतमि''ति व्विश्वद-र्शतो ह्येषोऽ''[17]ग्निꣳ सुम्नाय दधिरे पुरो जना''ऽइति यज्ञो वै सुम्नं यज्ञाय व्वाऽएतं पुरो दधते ''[18]श्रुत्कर्णꣳ सप्रथस्तमं त्वा गिरा दैव्यं मानुषा युगे''त्याश्रु एव तꣳ सप्रथस्तमं त्वा गिरा देवं मनुष्या ह्वामहऽइत्येतत् ॥३४॥ स एषोऽग्निरेव व्वैश्वानरः । एत-त्षड्ऋचमारम्भायैवेमाः सिकता न्युप्यन्तेऽग्निमेवास्मिन्नेतद्वैश्वानरꣳ रेतो भूतꣳ सिञ्चति षड्ऋचेन षड्ऋतवः संवत्सरः संवत्सरो व्वैश्वा-नरः ॥३५॥ तदाहुः । य्यद्रेतः सिकताऽउच्यन्ते किमासाꣳ[19] रेतो

---

१-४, १६. मा. सं. १२. १०८. ५-४. मा. सं. १२. १०९.
९-११, १३. मा. सं. १२. ११०. १२. रातिं इति. ग, ङ.
१४-१८. मा. सं. १२. १११. १९. रेत इति. ग, ङ.

रूपामिति शुक्लाऽइति ब्रूयाच्छुक्लᳬं हि रेतोऽथो पृश्नयऽइति पृश्नीव हि रेतः ॥३७॥ तदाहुः । यदार्द्रᳫं रेतः शुष्काः सिकता निवपति कथमस्यैताऽआर्द्रा रेतोरूपं भवन्तीति रसो वै छन्दाᳫंस्यार्द्रऽउ वै रसस्तद्यदेनाश्छन्दाभिर्निवपत्येवमु हास्यैताऽआर्द्रा रेतोरूपं भवन्ति ॥३७॥ तदाहुः । कथमस्यैताऽअहोरात्राभ्यामुपहिता भवन्तीति द्वे वाऽअहोरात्रे शुक्लं च कृष्णं च द्वे सिकते शुक्ला च कृष्णा चैवमु हास्यैताऽअहोरात्राभ्यामुपहिता भवन्ति ॥३८॥ तदाहुः । कथमस्यैताऽअहोरात्रैः सम्पन्ना ऽअन्यूनाऽअनतिरिक्ता ऽउपहिता भवन्तीत्यनन्तानि वाऽअहोरात्राण्यनन्ताः सिकताऽएवमु हास्यैता ऽअहोरात्रैः सम्पन्नाऽअन्यूनाऽअनतिरिक्ताऽउपहिता भवन्त्यथ कस्मात्समुद्रियं छन्दऽइत्यनन्तो वै समुद्रोऽनन्ताः सिकतास्तस्मात्समुद्रियं छन्दः ॥३९॥ तदाहुः । कथमस्यैताः पृथङ्नाना यजुर्भिरुपहिता भवन्तीति मनो वै यजुस्तदिदं मनो यजुः सर्व्वाः सिकता ऽअनुविभवत्येवमु हास्यैताः पृथङ्नाना यजुर्भिरुपहिता भवन्ति ॥४०॥ तदाहुः । कथमस्यैताः सर्व्वैश्छन्दोभिरुपहिता भवन्तीति यदेवैनाऽएतेन षड्ृचेन निवपति यावन्ति हि सप्तानां छन्दसामक्षराणि तावन्त्येतस्य षड्ृचस्याक्षराण्येवमु हास्यैताः सर्व्वैश्छन्दोभिरुपहिता[1] भवन्ति ॥४१॥ यद्वेव सिकता निवपति । प्रजापतिरेषोऽग्निः सर्व्वमु ब्रह्म प्रजापतिस्तद्धैतद्ब्रह्मणऽउत्सन्नं[2] यत्सिकताऽअथ यदनुत्सन्नमिदं तद्योऽयमग्निश्चीयते तद्यत्सिकता निवपति यदेव तद्ब्रह्मण ऽउत्सन्नं तदस्मिन्नेतत्प्रतिदधाति ता ऽअसंख्याताऽअपरिमिता निवपति को हि तद्वेद यावत्तद्ब्रह्मण ऽउत्सन्नᳫं स ह वाऽएतᳬं सर्व्वं कृत्स्नं प्रजापतिᳬं संस्करोति यऽएवं विद्वान्त्सिकता निवपति ॥४२॥ तदाहुः । कैतासामसंख्यातानाᳬं संख्येति द्वेऽइति ब्रूयाद्द्वे हि सिकते शुक्ला च कृष्णा चाथो सप्त विᳫं-

---

१. छन्दोभिरिति. ङ. २. उत्सन्नं इति. ग, ङ,

तिशतानीति ब्रूयादेतावन्ति हि संवत्सरस्याहोरात्राण्यथो द्वे द्वा-
त्रिंशे शतेऽइत्येतावन्ति ह्येतस्य षड्चस्याक्षराण्यथो पञ्चविंशश-
रिति पञ्चविंशशंहि रेतः ॥४३॥ ता ऽएता यजुष्मत्यऽइ-
ाः । ताऽआत्मन्नेवोपदधाति न पक्षपुच्छेष्वात्मन्ह्येव यजुष्मत्य
ष्टका ऽउपधीयन्ते न पक्षपुच्छेषु न सादयति नेद्रेतः प्रजातिशं
[1]पयानीति ॥४४॥ अथैनाऽआप्यानवतीभ्यामभिमृशति । इदमे-
द्रेतः सिक्तमाप्याययति तस्माद्योनौ रेतः सिक्तमाप्यायते सौमी-
ं प्राणो वै सोमः प्राणं तद्रेतसि दधाति तस्माद्रेतः सिक्तं प्राण-
सम्भवति पूयेद्ध व्यद्वते प्राणात्सम्भवेदेषो हैवात्र सूददोहाः
णो वै सोमः प्राणः सूददोहाः ॥४५॥ "आ[2]प्यायस्व समेतु ते ।
श्वतः सोम वृष्ण्यमि"ति रेतो वै वृष्ण्यमाप्यायस्व समेतु ते
तः सोम रेतऽइत्येत"ज्ञवा[3] वाजस्य सङ्गथऽ"इत्यन्नं वै वाजो
न्नस्य सङ्गथऽइत्येत"रसं ते [5]पयाᳪंसि समुयन्तु वाजाऽ"इति
ा वै पयोऽन्नं वाजाः सं ते रसाः समु यन्त्वन्नानीत्येत"रसं
ण्यान्यभिमातिषाहऽ"इति सᳪं रेताᳪंसि पाप्म सह ऽइत्येत"दा-
यमानोऽअमृताय सोमे"ति प्रजात्यां तदमृतं दधाति तस्मात्प्र-
तेरमृता "दिवि श्रवाᳪंस्युत्तमानि धिष्वे"ति चन्द्रमा वाऽअस्य
व श्रवऽउत्तमᳪं स ह्येनममुष्मिँल्लोके श्रावयति द्वाभ्यामाप्याय-
ा गायत्र्या च त्रिष्टुभा च तस्योक्तो बन्धुः ॥४६॥ अथातः सम्प-
। चतस्रो लोगेष्टकाऽउपदधाति षड्चेन निवपाति द्वाभ्यामा-
ययति तद्द्वादश द्वादश मासाः संवत्सरः संवत्सरोऽग्निर्यावान-
र्यावत्यस्य मात्रा तावत्तद्भवति ॥४७॥ Cf. का. श. ९. १. ५; तै.
५. २. ६; मै. सं. ३. २. ५; काठ. सं. २०. ४; कपि. ३१ ६.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे सप्तमकाण्डे
द्वितीयप्रपाठके तृतीयं ब्राह्मणम् ॥ ( अ. ३. १. )

---

१. स्थापयनीति इति. ख, ग, ङ, ञ. २, ३. मा. स. १२. ११२.
४. अन्ने इति. ग, ङ. एवमग्रेऽपि. ५–८. मा सं. १२. ११३.

## ७. २. ४.

### ( इष्टकाप्रोक्षणादि )

आप्यानवतीभ्यामभिमृश्य । प्रत्येत्यातिथ्येन प्रचरन्त्यातिथ्येन चर्य प्रवर्ग्योपसद्भ्यां प्रचरति प्रवर्ग्योपसद्भ्यां प्रचर्य्यैतां चि चितिꣳसमवशमयन्ति तद्यच्चर्मणि चर्म वै रूपꣳ रूपाणामुपा लोमतो लोम वै रूपꣳ रूपाणामुपाप्त्यै रोहिते रोहिते ह सर्व्वं रूपाणि सर्व्वेषाꣳ रूपाणामुपाप्त्याऽआनडुहेऽग्निरेष यदनड्वान रूपाणामुपाप्त्यै प्राचीनग्रीवे तद्धि देवत्रा ॥१॥ तदग्रेण गार्हपत्यम अन्तर्व्वेद्युत्तरलोम प्राचीनग्रीवमुपस्तृणाति तदेतां चितिꣳ समव मयन्त्यथ प्रोक्षति तद्यत्प्रोक्षति शुद्धमेवैतन्मेध्यं करोत्याज्येन तां शुद्धं मेध्यमथोऽअनभ्यारोहाय न हि किं चनान्यद्धविराज्येन ऽ क्षति तूष्णीमनिरुक्तं वै तद्यत्तूष्णीꣳ सर्व्वं वाऽअनिरुक्तꣳ सर्व्वे वैतच्छुद्धं मेध्यं करोत्यथोऽअनभ्यारोहाय न हि किञ्चनान्यद्ध स्तूष्णीं प्रोक्षन्ति ॥२॥ यद्वेव प्रोक्षति । हविर्व्वाऽएतत्तदेतदभिघ रयति यद्वै हविरभ्यक्तं यदभिघारितं तज्जुष्टं तन्मेध्यमाज्येनाज्ये हि हविरभिघारयन्ति तूष्णीं तूष्णीꣳ हि हविरभिघारयन्ति दर्भैस हि शुद्धा मेध्याऽअग्रैरग्रꣳ हि देवानाम् ॥३॥ तदाहुः । यत्प्रथ मामेव चितिं प्रोक्षति कथमस्यैष सर्व्वोऽग्निः प्रोक्षितो भवति कथ चर्मणि प्रणीतः कथमश्वप्रणीतऽइति यदेवात्र सर्व्वासां चितीनामि ष्टकाः प्रोक्षत्येवमु हास्यैष सर्व्वोऽग्निः प्रोक्षितो भवत्येवं चर्मणि प्रणीतऽएवमश्वप्रणीत ऽउद्यच्छन्त्येतां चितिम् ॥४॥ अथाहाग्निभ्यः प्रह्रियमाणेभ्योऽनुब्रूहीति । एतद्वै देवानुपप्रैष्यत ऽएतं यज्ञं तꣳस्य- मानान्रक्षाꣳसि नाष्ट्राऽअजिघाꣳसन्न यक्ष्यध्वे न यज्ञं तꣳस्यध्व- ऽइति तेभ्यऽएतानग्नीनेताऽइष्टका व्वज्रान्क्षुरपवीन्कृत्वा प्राहरंस्तैरेना- नस्तृण्वत तान्स्तृत्वाभयेऽनाष्ट्रऽएतं यज्ञमतन्वत ॥५॥

( काण्डस्यार्द्धम् १९९ )

तद्वाऽएतत्क्रियते । यद्देवाऽअकुर्वन्निदं नु तानि रक्षाꣳसि
देवैरेवाप[1]हतानि यत्त्वेतत्करोति यद्देवाऽअकुर्वंस्तत्करवाणीत्यथो
यदेव रक्षो यः पाप्मा तेभ्य एतानग्नीनेताऽइष्टका वज्रान्क्षुरप-
ान्कृत्वा प्रहरति तैरेनांस्तृणुते तांस्तृत्वाभयेऽनाष्ट्रऽएतं यज्ञं तनुते
॥६॥ तद्यदग्निभ्यऽइति । बहवो ह्येतेऽग्नयो यदेताश्चितयोऽथ यत्-
प्रह्रियमाणेभ्यऽइति प्र हि हरति ॥७॥ तद्धैकेऽन्वाहुः । पुरीष्यासो
ऽअग्नयः प्रावणेभिः सजोषसऽइति प्रायणरूपं न तथा कुर्यादाग्नेयी-
व गायत्रीः कामवतीरनुब्रूया“दाँ[2] ते वत्सो मनो यमत्तुभ्यं[3] ताऽ-
ङ्गिरस्तमाग्निः[4] प्रियेषु धामस्वि”ति ॥८॥ आग्नेयीरन्वाह । अग्निरू-
ाणामुपाप्त्यै कामवतीः कामानामुपाप्त्यै गायत्रीर्गायत्रोऽग्निर्यावा-
ग्निर्यावत्यस्य मात्रा तावतैवैनमेतद्रेतो भूतꣳ सिञ्चति तिस्रस्त्रि-
दग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतद्रेतो भूतꣳ सिञ्चति
ः सप्त सम्पद्यन्ते सह त्रिरनूक्ताभ्याꣳसप्तचितिकोऽग्निः सप्तर्त्तवः
वत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद्भवत्युपा-
श्वन्वाह रेतो वाऽअत्र यज्ञऽउपाꣳशु वै रेतः सिच्यते पश्चादनुब्रुवन्न-
ेति छन्दोभिरेवैतद्यज्ञं पश्चादभिरक्षन्नेति ॥९॥ अथाश्वꣳ शुक्लं पुर-
तान्नयन्ति । एतद्वै देवाऽअबिभयुर्यद्वै नऽइह रक्षाꣳसि नाष्ट्रा न
न्युरिति तऽएतं वज्रमपश्यन्नमुमेवादित्यमसौ वाऽआदित्यऽएषो-
श्वस्तऽएतेन वज्रेण पुरस्ताद्रक्षाꣳसि नाष्ट्राऽअपहत्याभयेऽनाष्ट्रे
स्ति समाश्नुवत तथैवैतद्यजमानऽएतेन वज्रेण पुरस्ताद्रक्षाꣳसि
ष्ट्राऽअपहत्याभयेऽनाष्ट्रे स्वस्ति समश्नुतऽआगच्छन्त्यग्निं दक्षिणतः
च्छस्य चितिमुपनिदधत्युत्तरतोऽश्वमाक्रमयन्ति ॥१०॥ तमुत्तरार्द्धे-
ग्नेः । अन्तरेण परिश्रितः प्राञ्चं नयन्ति तत्प्राच्यै दिशः पाप्मान-
हन्ति तं दक्षिणा तद्दक्षिणायै दिशः पाप्मानमपहन्ति तं प्रत्यञ्चं
प्रतीच्यै दिशः पाप्मानमपहन्ति तमुदञ्चं तदुदीच्यै दिशः पाप्मान-

१. अपहतानि इति. च.    २–४ मा. सं. १२. ११५–११७.

मपहन्ति सर्व्वाभ्यऽएवैतद्दिग्भ्यो रक्षाᳬंसि नाष्ट्राऽअपहत्याथैनमु
प्राञ्चं प्रसृजति तस्योक्तो बन्धुः ॥११॥ (शतम् ४१००) तं प्र
घ्यन्तम् । एतां चितिमवघ्रापयत्यसौ वाऽआदित्यऽएषोऽश्वऽइम
सर्व्वाः प्रजा यऽइमाऽइष्टकास्तद्यदवघ्रापयत्यसावेव तदादित्यऽइ
प्रजाऽअभिजिघ्रति तस्मादु हैतत्सर्व्वोऽस्मीति मन्यते प्रजापतेर्व्वी
तद्यत्प्रत्यञ्चं यन्तमवघ्रापयति प्रत्यङ् ह्येवैष यन्निमाः सर्व्वाः
ऽअभिजिघ्रति ॥१२॥ यद्वेवावघ्रापयति । असौ वाऽआदित्यऽए
ऽश्वऽइमऽउ लोकाऽएताः स्वयमातृण्णास्तद्यदवघ्रापयत्यसावेव त
दित्यऽइमाँल्लोकान्त्सूत्रे समावयते तद्यत्तत्सूत्रमुपरि तस्य बन्धुः ॥१
यद्वेवावघ्रापयति । अग्निर्देवेभ्यऽउदक्रामत्सोऽपः प्राविशत्ते दे
प्रजापतिमब्रुवंस्त्वमिममन्विच्छ स तुभ्यᳬं स्वाय पित्रऽआविर्भ
ष्यतीति तमश्वः शुक्लो भूत्वान्वैच्छत्तमद्भ्यऽउपोदासृप्तं पुष्कर
विवेद तमभ्यवेक्षां चक्रे स हैनमुदुवोष तस्मादश्वः शुक्लऽउद
मुखऽइवाथो ह दुरक्षो भावुकस्तमु वाऽऋत्वेव हिᳬंसित्वेव
तᳬं होवाच वरं ते ददामीति ॥१४॥ स होवाच । यस्त्वा
रूपेणान्विच्छाद्विन्दादेव त्वा सऽइति स यो हैनमेतेन रूपेणान्वि
च्छति विन्दति हैनं विदित्वा ह्वैवैनं चिनुते ॥१५॥ स शुक्लः स्यात्
तद्ध्येतस्य रूपं यऽएष तपति यदि शुक्लं न विन्देदप्यशुक्लः स्य
दश्वस्त्वेव स्याद्यद्यश्वं न विन्देदप्यनड्वानेव स्यादाग्नेयो वा
ऽअनड्वानग्निरु सर्व्वेषां पाप्मनामपहन्ता ॥१६॥ अथातोऽधिरो
हणस्यैव । तᳬं हैके पुरस्तात्प्रत्यञ्चमधिरोहन्ति पश्चाद्वा प्रा
न तथा कुर्यात्पशुरेष यदग्निर्यो वै पशुं पुरस्तात्प्रत्यञ्चमधिरोहति
विषाणाभ्यां तᳬं हन्त्यथ यः पश्चात्प्राञ्चं पद्भ्यां तमात्मनैवैनम
रोहेद्यं वाऽआत्मना पशुमारोहन्ति स पारयति स न हिनस्त्युत्तरत
यᳬं हि कं च पशुमारोहन्त्युत्तरतऽएवैनमारोहन्त्यारुह्याग्निमौत्तर
वेदिकं कर्म्म कृत्वात्मन्नग्निं गृह्णीतऽआत्मन्नग्निं गृहीत्वा सत्यᳬं सा

१ अथातोऽधिरोहणस्यैव इति.च. २ पशुमारोहन्ते इति.ग,घ. ३ आत्मन् इति.

ायति पुष्करपर्णमुपदधाति तस्यातः ॥१७॥ अथैतॅं सायं भूतेऽश्वं
रिणयन्ति । एतद्वै देवाऽअबिभयुर्यद्वै नऽइममिह रक्षाॅंसि नाष्ट्रा
हन्युरिति तस्माऽएतं व्वज्रमभिगोप्तारमकुर्व्वन्नमुमेवादित्यमसौ
ाऽआदित्य ऽएषोऽश्वस्तथैवास्माऽअयमेतं व्वज्रमभिगोप्तारं करोति
॥१८॥ तं वाऽउपास्तमयमादित्यस्य परिणयति । एष वाऽअस्य
त्युक्षं दिवा गोप्ता भवति रात्रिसाचयान्यु वै रक्षाॅंसि रात्र्याऽ
वास्माऽएतं व्वज्रमभिगोप्तारं करोति सर्व्वतः परिणयति सर्व्वतऽ
वास्माऽएतं व्वज्रमभिगोप्तारं करोति त्रिष्कृत्वः परिणयति त्रिवृत-
वास्माऽएतं व्वज्रमभिगोप्तारं करोत्यथैनमुदञ्चं प्राञ्चं प्रसृजति
स्योक्तो बन्धुरथ स पुनर्व्विपल्ययते तस्योपरि बन्धुः ॥१९॥
Cf. का. श. ९. २. २; तै. सं. ५. २. ६; मै. सं. ३. २. ५;
काठ. सं. २०. ५; कपि. सं. ३२. ७.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे सप्तमकाण्डे
द्वितीयप्रपाठके चतुर्थं ब्राह्मणम् ॥ (अ. ३. २.)

( तृतीयोऽध्यायः )

द्वितीयः प्रपाठकस्समाप्तः ॥

( कण्डिकासंख्या १०५ )

अथ तृतीयः प्रपाठकः ॥

७. ३. १.

( चितः प्रथमः प्रस्तारः )

आत्मन्नग्निं गृह्णीते चेष्यन् । आत्मनो वाऽएतमधिजनयति
ादृशाद्ध जायते तादृङ्ङेव भवति स यदात्मन्नगृहीत्वाग्निं चिनुया-
मनुष्यादेव मनुष्यं जनयेन्मर्त्यो मर्त्यमनुपहतपाप्मनोऽनपहतपाप्मा-

१ तस्यातः इति ग, ङ.    २ मनपहृत इति. ग, ङ.

नमथ य्यदात्मन्नग्निं गृहीत्वा चिनोति तदग्नेरेवाध्यग्निं जनय
तादमृतमपहतपाप्मनोऽपहतपाप्मानम् ॥१॥ स गृह्णाति । '
गृह्णाम्यग्रेऽअग्निमि''ति । तदात्मन्नेवाग्रेऽग्निं गृह्णीते "रायस्
सुप्रजास्त्वाय सुवीर्यायें''ति तदु सर्व्वाऽआशिषऽआत्मन्
"मामु देवताः सचन्तामि''ति तदु सर्व्वान्देवानात्मन्गृह्णीते तद
आत्मनोऽधि जनयिष्यन्भवति तत्सर्वमात्मन्गृह्णीते स वै तिष्ठ
न्नग्निं गृहीत्वानूपविश्य चिनोति पशुरेष य्यदग्निस्तस्मात्पशु
न्गर्भं धित्वानूपविश्य विजायते ॥२॥ अथ सत्यꣳ साम गाय
एतद्धै देवाऽअब्रुवन्त्सत्यमस्य मुखं करवाम ते सत्यं भविष्यामः
नोऽनुवर्त्स्यति सत्यो नः स कामो भविष्यति य्यत्कामाऽए
रिष्यामहऽइति ॥३॥ तऽएतत्सत्यꣳ साम पुरस्तादगायन् । त
सत्यं मुखमकुर्व्वस्ते सत्यमभवन्त्सत्यमेनानन्ववर्त्तत सत्यऽएषां
कामोऽभवद्यत्कामाऽएतदकुर्व्वत ॥४॥ तथैवैतद्यजमानः । य्यत्
साम पुरस्ताद्गायति तदस्य सत्यं मुखं करोति स सत्यं भवति
त्यमेनमनुवर्त्तते सत्योऽस्य स कामो भवति य्यत्कामऽएतत्
॥५॥ तद्यत्तत्सत्यम् । आपऽएव तदापो हि वै सत्यं तस्मा
य्यन्ति तत्सत्यस्य रूपमित्याहुरपऽएव तँदस्य सर्व्वस्याग्रमकु
स्माद्यदैवापो यन्त्यथेदꣳ सर्व्वं जायते य्यदिदं किञ्च ॥६॥
पुष्करपर्णमुपदधाति । य्योनिर्व्वै पुष्करपर्णं य्योनिमेवैतदुपद
॥७॥ य्यद्वेव पुष्करपर्णमुपदधाति । आपो वै पुष्करं तासामियं
य्यथा ह वाऽइदं पुष्करपर्णमप्स्वध्याहितमेवमियमप्स्वध्याहित
य्योनिरग्नेरियꣳ ह्यग्निरस्यै हि सर्व्वोऽग्निश्चीयतऽइमामेवैतदुप
तामनन्तर्हिताꣳ सत्यादुपदधातीमां तत्सत्ये प्रतिष्ठापयति त
दियꣳ सत्ये प्रतिष्ठिता तस्मादियमेव सत्यमियꣳ ह्येवैषां त
नामद्धातमाम् ॥८॥ "अपां पृष्ठमसि य्योनिरग्ने''रिति । इ

१-३. मा. सं. १३. १ ४ तस्य इति ग, ङ.
५ किञ्च ॥६॥ अथ इति. ञ. ६ मा. सं. १३. २.

हीयं पृष्ठं योनिर्हीयमग्नेः "समुद्रमभितः पिन्वमानमि"ति समुद्रो हीमामभितः पिन्वते "वर्धमानो महाँ २॥ऽआ च पुष्कर"ऽइति वर्द्धमानो महीयस्व पुष्करऽइत्येतत् "दिवो मात्रया वरिम्णा प्रथस्वे"त्यनुविमाष्ट्र्यसौ वाऽआदित्यऽएषोऽग्निर्नो हैतमन्यो दिवो वरिमा यन्तुमर्हति द्यौर्भूत्वैनं यच्छेत्येवैतदाह स्वराजोपदधाति स्वाराज्यꣳ ह्यपाꣳ सादयित्वा सूददोहसाधिवदति तस्योक्तो बन्धुः॥९॥

अथ रुक्ममुपदधाति । असौ वाऽआदित्यऽएष रुक्मऽएष हीमाः सर्व्वाः प्रजाऽअतिरोचते रोचो ह वै तꣳ रुक्मऽइत्याचक्षते परोक्षं परोक्षकामा हि देवाऽअमुमेवैतदादित्यमुपदधाति स हिरण्मयो भवति परिमण्डलऽएकविꣳशतिनिर्बाधस्तस्योक्तो बन्धुरधस्तान्निर्बाधमुपदधाति रश्मयो वाऽएतस्य निर्बाधाऽअवस्ताद्ध वाऽएतस्य रश्मयः ॥१०॥ तं पुष्करपर्ण्णऽउपदधाति । योनिर्व्वै पुष्करपर्ण्णं योनावेवैनमेतत्प्रतिष्ठापयति ॥११॥ यद्वेव पुष्करपर्ण्णऽउपदधाति । प्रतिष्ठा वै पुष्करपर्ण्णमियं वै पुष्करपर्ण्णमियमु वै प्रतिष्ठा यो वाऽअस्यामप्रतिष्ठितोऽपि दूरे सन्नप्रतिष्ठितऽएव स रश्मिभिर्व्वाऽएषोऽस्यां प्रतिष्ठितोऽस्यामेवैनमेतत्प्रतिष्ठायां प्रतिष्ठापयति ॥१२॥ यद्वेव पुष्करपर्ण्णऽउपदधाति । इन्द्रो वृत्रꣳ हत्वा नास्तृषीति मन्यमानोऽपः प्राविशत्ताऽअब्रवीद्बिभेमि वै पुरं मे कुरुतेति स योऽपाꣳ रसऽआसीत्तमूर्ध्वꣳसमुदौहंस्तामस्मै पुरमकुर्व्वंस्तद्यदस्मै पुरमकुर्व्वंस्तस्मात्पूष्करं पूष्करꣳ ह वै तत्पुष्करमित्याचक्षते परोक्षं परोक्षकामा हि देवास्तद्यत्पुष्करपर्ण्णऽउपदधाति यमेवास्यैतमापो रसꣳ समुदौहन्यामस्मै पुरमकुर्व्वंस्तस्मिन्नेवैनमेतत्प्रतिष्ठापयति ॥१३॥

"ब्रह्म जज्ञानं प्रथमं पुरस्तादि"ति । असौ वाऽआदित्यो ब्रह्माहरहः पुरस्ताज्जायते "विसीमतः सुरुचो वेनऽ आवरि"ति मध्यं वै

---

१-३ मा. सं. १३. २. ४ उपदधाति ग, ङ, ञ. ५ पुष्करं पुष्करꣳ इति.ग
६, ७ मा. सं. १३. ३

सीमेमे लोकाः सुरुचोऽसावादित्यो व्वेनो यद्वै प्रजिजनिषमा व्वेनत्तस्माद्वेनस्तानेष सीमतो मध्यतो व्विभूण्वन्नुदेति "स बुध्न्याऽउपमाऽअस्य व्विष्ठा" ऽइति दिशो वाऽअस्य बुध्न्याऽउपमा व्विष्ठास्ता ह्येषऽउपविविष्ठते "सतश्च य्योनिमसतश्च व्विवरि"तीमे लोकाः सतश्च य्योनिरसतश्च य्यच्च ह्यस्ति य्यच्च न तदेभ्यऽएव लोकेभ्यो जायते त्रिष्टुभोपदधाति त्रैष्टुभो ह्येष सादयित्वा सूददोहसाधिवदति तस्योक्तो बन्धुः ॥१४॥ अथ पुरुषमुपदधाति । प्रजापतिः सोऽग्निः स य्यजमानः स हिरण्मयो भवति ज्योतिर्वै हिरण्यं ज्योतिरग्निरमृतꣳ हिरण्यममृतमग्निः पुरुषो भवति पुरुषो हि प्रजापतिः ॥१५॥ य्यद्वेव पुरुषमुपदधाति । प्रजापतेर्व्विस्रस्तस्य रम्या तनूर्मध्यतऽउदक्रामत्तस्यामेनमुत्क्रान्तायां देवाऽअजहुस्तं य्यत्र देवाः समस्कुर्वंस्तदस्मिन्नेताꣳ रम्यां तनूं मध्यतोऽदधुस्तस्यामस्य देवाऽअरमन्त तद्यदस्यैतस्याꣳ रम्यायां तन्वां देवाऽअरमन्त तस्माद्धि रम्यꣳ हि रम्यꣳ ह वै तद्धिरण्यमित्याचक्षते परोक्षं परोक्षकामा हि देवास्तथैवास्मिन्नयमेताꣳ रम्यां तनूं मध्यतो दधाति तस्यामस्य देवा रमन्ते प्राणो वाऽअस्य सा रम्या तनूः प्राणमेवास्मिन्नेतं मध्यतो दधाति ॥१६॥ तꣳ रुक्मऽउपदधाति । असौ वाऽआदित्यऽएष रुक्मोऽथ य्यऽएषऽएतस्मिन्मण्डले पुरुषः सऽएष तमेवैतदुपदधाति ॥१७॥ उत्तानमुपदधाति । एतद्वै देवाऽअब्रुवन्यदि वाऽइमावर्वाञ्चाऽउपधास्यामः सर्व्वमेवेदं प्रधक्ष्यतो य्यदु पराञ्चौ पराञ्चावेव तप्स्यतो य्यदु सम्यञ्चावन्तरैवैतावेतज्ज्योतिर्भविष्यत्यथोऽअन्योन्यꣳ हिꣳसिष्यतऽइति तेऽर्व्वाञ्चममन्यमुपादधुः पराञ्चमन्यꣳ सऽएष रश्मिभिरर्व्वाङ् तपति रुक्मः प्राणैरेषऽऊर्द्ध्वः पुरुषः प्राञ्चमुपदधाति प्राङ्ह्येषाऽग्निश्चीयते ॥१८॥ "हिरण्यगर्भः समवर्त्तताग्र"ऽइति । हिरण्यगर्भो ह्येष समवर्त्तताग्रे

१–३ मा. सं. १३. ४

"भूतस्य जातः पतिरेकऽआसीदि"त्येष ह्यस्य सर्व्वस्य भूतस्य जातः पतिरेकऽआसी"त्स दाधार पृथिवीं द्यामुतेमामि"त्येष वै दिवं च पृथिवीं च दाधार "कस्मै देवाय हविषा विधेमे"ति प्रजापतेर्व्वै कस्तस्मै हविषा विधेमेत्येतत् ॥१९॥ "द्रप्सश्चस्कन्द पृथिवीमनु द्यामि"ति । असौ वाऽआदित्यो द्रप्सः स दिवं च पृथिवीं च स्कन्दतीत्यमूमितीमा"मिमं च योनिमनु यश्च पूर्व्व"ऽइतीमं च लोकममुं चेत्येतदथो यश्चेदमेतर्हि चीयते यश्चादः पूर्व्वमचीयतेति "समानं योनिमनु सञ्चरन्तमि"ति समानꣳ ह्येषऽएतं योनिमनु सञ्चरति "द्रप्सं जुहोम्यनु सप्त होत्राऽ"इत्यसौ वाऽआदित्यो द्रप्सो दिशः सप्त होत्राऽअमुं तदादित्यं दिक्षु प्रतिष्ठापयति ॥२०॥ द्विपाद्भ्यामुपदधाति । द्विपाद्यजमानो यजमानोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदुपदधाति । त्रिष्टुब्भ्यां त्रैष्टुभो ह्येष सादयित्वा सूददोहसाधिवदति तस्योक्तो बन्धुः ॥२१॥ अथ साम गायति । एतद्वै देवाऽएतं पुरुषमुपधाय तमेतादृशमेवापश्यन्यथैतच्छुष्कं फलकम् ॥२२॥ तेऽब्रुवन् । उप तज्जानीत यथास्मिन्पुरुषे वीर्यं दधामेति तेऽब्रुवंश्चेतयध्वमिति चितिमिच्छतेति वाव तदब्रुवंस्तदिच्छत यथास्मिन्पुरुषे वीर्यं दधामेति ॥२३॥ ते चेतयमानाः । एतत्सामापश्यंस्तदगायंस्तदस्मिन्वीर्यमदधुस्तथैवास्मिन्नयमेतद्दधाति पुरुषे गायति पुरुषे तद्वीर्यं दधाति चित्रे गायति सर्व्वाणि चित्राण्यग्निस्तमुपधाय न पुरस्तात्परीयान्नेन्मायमाग्निर्हिनसदिति ॥२४॥ अथ सर्प्पनामैरुपतिष्ठते । इमे वै लोकाः सर्पास्ते हानेन सर्व्वेण सर्प्पन्ति यदिदं किञ्च सर्व्वेषामु हैष देवानामात्मा यदग्निस्ते देवाऽएतमात्मानमुपधायाबिभयुर्यद्वै नऽइमे लोकाऽअनेनात्मना नापसर्प्पेयुरिति ॥२५॥ तऽएतानि सर्प्पनामान्यपश्यन् । तैरुपातिष्ठन्त तैरिमाऽइमां लोकानस्थापयंस्तैरनमयन्यदनमयंस्तस्मात्सर्प्पनामानि

१-३ मा. सं. १३. ४. ५-७ मा. सं. १३. ५. ८ हिनसादिति ख,

तथैवैतद्यजमानो यत्सर्प्पनामैरुपतिष्ठतऽइमानेवास्माऽएतल्लोकान्त्स
पयतीमाँल्लोकान्नमयति तथो ह्यस्यैतऽएतेनात्मना न सर्प्पन्ति ॥२
यद्वेव सर्प्पनामैरुपतिष्ठते । इमे वै लोकाः सर्प्पा यद्धि किञ्च सर्प्प
त्येव तल्लोकेषु सर्प्पति तद्यत्सर्प्पनामैरुपतिष्ठते यऽएवेषु लोकेषु ना
र्यो व्यद्वरो वा शिमिदा तदेवैतत्सर्व्वंᳫं शमयति ॥२७॥ "नमोऽ
सर्प्पेभ्यो ये के च पृथिवीमनु । ये ऽअन्तरिक्षे ये दिवि तेभ्यः सर्प्पे
नम"ऽइति यऽएवैषु त्रिषु लोकेषु सर्प्पास्तेभ्य ऽएतन्नमस्करोति॥२
"या ऽइषवो यातुधानानामि"ति । यातुधानप्रेषिता हैके दशं
"ये वा[3] व्वनस्पती [1]ऽ२नु । ये वावटेषु शेरते तेभ्यः सर्प्पे
नम"ऽइति ये चैव व्वनस्पतिषु सर्प्पा ये चावटेषु शेरते ते
ऽएतन्नमस्करोति ॥२९॥ "[4]ये वामी रोचने दिवः । ये वा सूर्य
रश्मिषु । येषामप्सु सदस्कृतं तेभ्यः सर्प्पेभ्यो नम"ऽइति यत्र यत्रै
तदेवैभ्य ऽएतन्नमस्करोति नमो नमऽइति यज्ञो वै नमो यज्ञेनैवै
नेतन्नमस्कारेण नमस्यति तस्मादु ह नायज्ञियं ब्रूयान्नमस्तऽइ
यथा हैनं ब्रूयाद्यज्ञस्तऽइति तादृक्तत् ॥३०॥ त्रिभिरुपतिष्ठते
त्रयऽइमे[5] लोका ऽअथो त्रिवृदग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा त
वतैवास्माऽएतदिमाँल्लोकान्त्स्थापयत्यथो तावतैवैतदिदᳫं सर्व्वं
शमयति तिष्ठन्नुपतिष्ठते तिष्ठन्तीव वाऽइमे लोका ऽअथो तिष्ठ
व्वीर्य्यवत्तरः[6] ॥३१॥ अथैनमुपविश्याभिजुहोति । आज्येन पञ्चगृह
तेन तस्योक्तो बन्धुः सर्व्वतः परिसर्प्पᳫं सर्व्वाभ्य ऽएवैनमेतद्दिग्भ्यो
न्नेन प्रीणाति ॥३२॥ यद्वेवैनमभिजुहोति । एतद्वै देवा ऽएतमात्म
नमुपधायाबिभयुर्यद्वै नऽइममिह रक्षाᳫंसि नाष्ट्रा न हन्युरिति
ऽएतान्राक्षोघ्नान्प्रतिसरानपश्यन् "[7]कृणुष्व पाजः प्रसितिं न पृथ्व
मि"ति राक्षोघ्ना वै प्रतिसरास्तऽएतैः प्रतिसरैः सर्व्वाभ्यो दिग्भ्यः

१ मा. सं. १३. ६ २, ३. मा. सं. १३. ७ ४. मा. सं. १३. ८
५ इमे इति. ग. ६. वत्तरः इति. ख, ग, ज. ७. मा. सं. १३. ९.

रक्षाᳬंसि नाष्ट्रा अपहत्याऽभयेऽनाष्ट्रऽएतामात्मानᳬं समस्कुर्व्वत तथैवैतद्यजमानऽएतैः प्रतिसरैः सर्व्वाभ्यो दिग्भ्यो रक्षाᳬंसि नाष्ट्रा ऽअपहत्याऽभयेऽनाष्ट्रऽएतमात्मानᳬं संस्कुरुते ॥३३॥ आज्येन जुहोति । व्वज्रो वाऽआज्यं व्वज्रेणैवैतद्रक्षाᳬंसि नाष्ट्राऽअपहन्ति पञ्चगृहीतेन पञ्चचितिकोऽग्निः पञ्चर्त्तवः संवत्सरः संवत्सरोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैतद्रक्षाᳬंसि नाष्ट्रा ऽअपहन्त्याग्नेयीभिरग्निर्व्वै ज्योती रक्षोहाग्निनैवैतद्रक्षाᳬंसि नाष्ट्रा ऽअपहन्ति त्रिष्टुब्भिर्व्वज्रो वै त्रिष्टुब्वज्रेणैवैतद्रक्षाᳬंसि नाष्ट्रा ऽअपहन्ति सर्व्वतः परिसर्पᳬं सर्व्वाभ्यऽएवैतद्दिग्भ्यो रक्षाᳬंसि नाष्ट्रा ऽअपहन्ति ॥३४॥ पश्चादग्नेः प्राङासीनः[1] । अथोत्तरतो[2] दक्षिणाथ पुरस्तात्प्रत्यङ्ङथ जघनेन परीत्य दक्षिणतऽउदङ्ङासीनस्तद्दक्षिणावृत्तद्धि देवत्राथानुपरीत्य पश्चात्प्राङासीनस्तथो हास्यैतत्प्रागेव कर्म कृतं भवति ॥३५॥ अथ स्रुचाऽउपदधाति । बाहू वै स्रुचौ बाहूऽएवास्मिन्नेतत्प्रतिदधाति ते यत्स्रुचौ भवतः स्रुचौ हि बाहूऽइदमेव कपुत्सलमयं[3] दण्डो द्वे भवतो द्वौ हीमौ बाहू पार्श्वतऽउपदधाति पार्श्वतो हीमौ बाहू ॥३६॥ कार्ष्मर्यमयीं दक्षिणतऽउपदधाति । एतद्वै देवाऽअबिभयुर्यद्वैनो यज्ञं दक्षिणतो रक्षाᳬंसि नाष्ट्रा न हन्युरिति तऽएतᳬं रक्षोहणं व्वनस्पतिमपश्यन्कार्ष्मर्य्यं तऽएतेन व्वनस्पतिना दक्षिणतो रक्षाᳬंसि नाष्ट्राऽअपहत्याभयेऽनाष्ट्रऽएतं यज्ञमतन्वत तथैवैतद्यजमानऽएतेन व्वनस्पतिना दक्षिणतो रक्षाᳬंसि नाष्ट्राऽअपहत्याभयेऽनाष्ट्रऽएतं यज्ञं तनुतऽआज्येन पूर्णा भवति व्वज्रो वाऽआज्यं व्वज्रेणैवैतद्दक्षिणतो रक्षाᳬंसि नाष्ट्रा ऽअपहन्ति ॥३७॥ अथौदुम्बरीमुत्तरतऽउपदधाति । ऊर्ग्वै रसऽउदुम्बरऽऊर्जमेवास्मिन्नेतद्रसं दधाति दध्ना पूर्णा भवति रसो वै दधि रसमेवास्मिन्नेतद्दधाति ॥३८॥ यद्वेव स्रुचाऽउपदधाति । प्रजापतेर्व्विस्रस्तस्याग्निस्तेज ऽआदाय दक्षिणाकर्षत्सोऽत्रोदरमद्यत्कृष्ट्वोदरमत्तस्मात्कार्ष्मर्य्योऽथास्येन्द्र ऽओज

[1] प्राङासीन इति. ञ.  [2] अथ इति. ख.  [3]. कपुच्छलमयं इति घ.

ऽआदायोदङ्ङुदक्रामत्सऽउदुम्बरोऽभवत् ॥३९॥ तावब्रवीत् । उमेतं प्रति मऽएतद्धत्तं य्येन मे य्युवमुदक्रमिष्टमिति ताभ्यां वै न सर्व्वमन्नं प्रयच्छेति तौ वै मा बाहू भूत्वा प्रपद्येथामिति तथेति ताभ्यां वै सर्व्वमन्नं प्रायच्छत्तावेनं बाहू भूत्वा प्रापद्येतां तस्माद्बाहुभ्यामेवान्नं क्रियते बाहुभ्यामद्यते बाहुभ्याᳬ हि स सर्व्वमन्नं प्रायच्छत् ॥४०॥ स कार्ष्मर्यमयीं दक्षिणतऽउपदधाति । "अग्नेष्ट्वा तेजसा सादयामी"ति य्यदेवास्य तदग्निस्तेज ऽआदाय दक्षिणाकर्षत्तदस्मिन्नेतत्प्रतिदधात्य"ग्निर्मूर्द्धा दिवः ककुदि"त्येषऽउ सोऽग्निर्गायत्र्या गायत्रोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनामेतदुपदधाति घृतेन पूर्णा भवत्याग्नेयं वै घृतᳫ स्वेनैवैनमेतद्भागेन स्वेन रसेन प्रीणाति ॥४१॥ अथौम्बुरीमुत्तरतऽउपदधाति । "इन्द्रस्य त्वौजसा सादयामी"ति य्यदेवास्य तदिन्द्र ऽओजऽआदायोदङ्ङुदक्रामत्तदस्मिन्नेतत्प्रतिदधाति "भुवो यज्ञस्य रजसश्च नेते"त्येष ऽउ सऽइन्द्रः सा य्यदाग्नेय्याग्निकर्म ह्यथ य्यत्रिष्टुप्त्रैष्टुभो हीन्द्रऽऐन्द्राग्नोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनामेतदुपदधातीन्द्राग्नी वै सर्व्वे देवाः सर्व्वदेवत्योऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनामेतदुपदधाति दध्ना पूर्णा भवत्यैन्द्रं वै दधि स्वेनैवैनमेतद्भागेन स्वेन रसेन प्रीणाति ॥४२॥ तावस्यैताविन्द्राग्नी ऽएव बाहू । तावेनं तेजसा च व्वीर्येण च प्रपद्येते स सम्प्रत्युरः पुरुषमाकाश्य य्यत्राभ्याप्नोति तदालिख्यैनेऽउपदधात्येष हैतयोर्लोकः ॥४३॥

( अर्द्धप्रपाठकः )

ते हैके तिरश्च्याऽउपदधाति । तिर्य्यञ्चौ वाऽइमौ बाहूऽइति न तथा कुर्यात्प्राच्यावेवोपदध्यात्प्राङ् ह्येषोऽग्निश्चीयतेऽथोऽएवं वै बाहू व्वीर्यवत्तरौ ते नानोपदधाति नाना सादयति नाना सूददोहसाधिवदति नाना हीमौ बाहू ॥४४॥ तदाहुः । नैतस्य पुरुषस्य

१. मा. सं. १३. १३ २, ३. मा. सं. १३. १४. ४. मा. सं. १३. १५

बाहू कुर्य्यादेतौ वाऽअस्य बाहू व्येऽएते स्रुचौ नेदाति रेचयानीति स वै कुर्य्यादेवैतौ वाऽअस्य बाहूऽअन्वेते स्रुचावथोऽएतौ पक्षावथो यान्येतस्मिन्नग्नौ रूपाण्युपधास्यन्भवति यान्स्तोमान्यानि पृष्ठानि यानि छन्दाᳬंस्येतयोरेव सा संस्कृतिरेतयोर्व्वृद्धिस्तस्मादु कुर्य्यादेवैतस्य पुरुषस्य बाहू ॥४५॥ Cf. का. श. ९. ३. १–४; तै सं. ५. २. ७; मै सं ३. २. ६; काठ. सं. २०. ५; कपि. सं. ३२. ७.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे सप्तमकाण्डे
तृतीयप्रपाठके प्रथमं ब्राह्मणम् ॥ ( अ.२.२. )

## ७. ३. २.

## ( स्वयमातृण्णादीष्टकोपधानम् )

स्वयमातृण्णामुपदधाति । इयं वै स्वयमातृण्णेमामेवैतदुपदधाति तामनन्तर्हितां पुरुषादुपदधात्यन्नं वै स्वयमातृण्णेयं वै स्वयमातृण्णेयमु वाऽअन्नमस्याᳬं हि सर्व्वमन्नं पच्यतेऽनन्तर्हितमेवास्मादेतदन्नं दधात्युत्तरामुत्तरमेवास्मादेतदन्नं दधाति ॥१॥ यद्वेव स्वयमातृण्णामुपदधाति । प्राणो वै स्वयमातृण्णा प्राणो ह्येवैतत्स्वयमात्मनऽआतृन्ते प्राणमेवैतदुपदधाति तामनन्तर्हितां पुरुषादुपदधाति प्राणो वै स्वयमातृण्णेयं वै स्वयमातृण्णेयमु वै प्राणो यद्धि किञ्च प्राणीयं तत्सर्व्वं बिभर्त्यनन्तर्हितमेवास्मादेतत्प्राणं दधात्युत्तरामुत्तरमेवास्मादेतत्प्राणं दधाति ॥२॥ यद्वेव स्वयमातृण्णामुपदधाति । प्रजापतिं विस्रस्तं देवताऽआदाय व्युदक्रामंस्तासु व्युत्क्रामन्तीषु प्रतिष्ठामभिपद्योपाविशत् ॥३॥ स यः स प्रजापतिर्व्यस्रᳬंसत । अयमेव स योऽयमग्निश्चीयतेऽथ या सा प्रतिष्ठैषा सा प्रथमा स्वयमातृण्णा तद्यदेतामत्रोपदधाति यदेवास्यैषात्मनस्तदस्मिन्नेतत्प्रतिदधाति तस्मादेतामत्रोपदधाति ॥४॥ तां वै प्रजापतिनोपदधाति । प्रजापतिर्ह्येवैत-

---

१ मात्मन इति. ग.  २ उपदधाति इति. ग.  ३ एतामिति. ग

ऽस्वयमात्मनः प्रत्यधत्त "ध्रुवासी"ति स्थिरासीत्येतदथो प्रतिष्ठिता-सीति "धरुणे"ति प्रतिष्ठा वै धरुणमा"स्तृता विश्वकर्मणे"ति प्रजापतिर्वै विश्वकर्मा तेनास्तृतासीत्येत"न्मा त्वा समुद्रऽउद्वधी-न्मा सुपर्ण"ऽइति रुक्मो वै समुद्रः पुरुषः सुपर्णस्तौ त्वा मोद्बाधि-षातामित्येत"दव्यथमाना पृथिवीं दृꣳहे"ति यथैव यजुस्तथा बन्धुः ॥५॥ "प्रजापतिष्ट्वा सादयत्वि"ति । प्रजापतिर्ह्येतां प्रथमां चितिमप-श्य"दपां पृष्ठे समुद्रस्येमन्नि"त्यपाꣳ हीयं पृष्ठꣳ समुद्रस्य हीयमे-मा "व्यचस्वतीं प्रथस्वतीमि"ति व्यचस्वती च हीयं प्रथस्वती च "प्रथस्व पृथिव्यसी"ति प्रथस्व पृथिवी चासीत्येतत् ॥६॥ "भूरसी"ति । भूर्हीयं "भूमिरसी"ति भूमिर्हीय"मदितिरसी"तीयं वाऽ अदि-तिरियꣳ हीदꣳ सर्व्वं ददते "विश्वधाया"ऽइत्यस्याꣳ हीदꣳ सर्व्वꣳ हितं "विश्वस्य भुवनस्य धर्त्री"ति सर्व्वस्य भुवनस्य ध-र्त्रीत्येत"त्पृथिवीं यच्छ पृथिवीं दृꣳह पृथिवीं मा हिꣳसी"रित्या-त्मानं यच्छात्मानं दृꣳहात्मानं मा हिꣳसीरित्येतत् ॥७॥ "विश्व-स्मै प्राणायापानाय । व्यानायोदानाये"ति प्राणो वै स्वयमातृण्णा सर्व्वस्माऽउ वाऽएतस्मै प्राणः "प्रतिष्ठायै चरित्राये"तीमे वै लोकाः स्वयमातृण्णा ऽइमऽउ लोकाः प्रतिष्ठा चरित्रम"ग्निष्ट्वाभिपात्वि"त्यग्नि-ष्ट्वाभिगोपायत्वित्येत"न्मह्या स्वस्त्ये"ति महत्या स्वस्त्येत्येत"च्छर्दिषा शंतमेने"ति यच्छर्दिः शंतमं तेनेत्येतत्सादयित्वा सूददोहसाधिवदति तस्योक्तो बन्धुरथ साम गायति तस्योपरि बन्धुः ॥८॥ तदाहुः। कथमेष पुरुषः स्वयमातृण्णयानभिनिहितो भवतीत्यन्नं वै स्वयमातृण्णा प्राणः स्वयमातृण्णानभिनिहितो वै पुरुषोऽन्नेन च प्राणेन च ॥९॥ अथ दूर्व्वे-ष्टकामुपदधाति । पशवो वै दूर्व्वेष्टका पशूनेवैतदुपदधाति तद्यैरदो-ऽग्निरन्तर्हितैः पशुभिरुपैत्तऽएते तानेवैतदुपदधाति तामनन्तर्हिताꣳ

१–५ मा. सं. १३. १६.
६–९ मा. सं. १३. १७.
१०–१६ मा. सं. १३. १८.
१७–२१ मा. सं. १३. १९.

स्वयमातृण्णायाऽउपदधातीयं वै स्वयमातृण्णानन्तर्हितांस्तदस्यै प-
शून्दधात्युत्तरामुत्तरांस्तदस्यै पशून्दधाति ॥१०॥ अथ दूर्वेष्टका-
मुपदधाति । प्रजापतेर्विस्रस्तस्य यानि लोमान्यशीयन्त ताऽइमा
ऽओषधयोऽभवन्नथास्मात्प्राणो मध्यत ऽउदक्रामत्तस्मिन्नुत्क्रान्तेऽप-
द्यत ॥११॥ सोऽब्रवीत् । अयं वाव माधूर्वीदिति यदब्रवीद्धूर्वीन्मे-
ति तस्माद्धूर्वा धूर्वा ह वै तां दूर्वेत्याचक्षते परोक्षं परोक्षकामा
हि देवास्तदेतत्क्षत्रं प्राणो ह्येष रसो लोमान्यन्याऽओषधय ऽएतामु-
पदधत्सर्वाऽओषधीरुपदधाति ॥१२॥ तं यत्र देवाः समस्कुर्वन् ।
तदस्मिन्नेतं प्राणꣳ रसं मध्यतोऽदधुस्तथैवास्मिन्नयमेतद्दधाति ता-
मनन्तर्हिताꣳ स्वयमातृण्णायाऽउपदधातीयं वै स्वयमातृण्णानन्त-
र्हितास्तदस्याऽओषधीर्दधात्युत्तरामुत्तरास्तदस्याऽओषधीर्दधाति सा
स्यात्समूला साग्रा कृत्स्नतायै यथा स्वयमातृण्णायामुपहिता भूमिं
प्राप्नुयादेवमुपदध्यादस्याꣳ ह्येवैता जायन्तऽइमामनु प्ररोहन्ति ॥१३॥
'काण्डात्काण्डात्प्ररोहन्ती । परुषः परुषस्परी''ति काण्डात्काण्डाद्ध्ये-
षा पर्वणः पर्वणः प्ररोह''त्येवा नो दूर्वे प्रतनु सहस्रेण शतेन
चे''ति यथैव यजुस्तथा बन्धुः ॥१४॥ ''या शतेन प्रतनोषि ।
सहस्रेण विरोहसीति शतेन ह्येषा प्रतनोति सहस्रेण विरोहति
'तस्यास्ते देवीष्टके विधेम हविषा वयमि''ति यथैव यजु-
स्तथा बन्धुर्द्वाभ्यामुपदधाति तस्योक्तो बन्धुः सादयित्वा सूद-
दोहसाधिवदति तस्योक्तो बन्धुः ॥१५॥ अथ द्वियजुषमुपदधाति ।
इन्द्राग्नीऽअकामयेताꣳ स्वर्गं लोकमियावेति तावेतामिष्टकामपश्यतां
द्वियजुषमिमामेव तामुपादधातां तामुपधायास्यै प्रतिष्ठायै स्वर्गं लो-
कमैतां तथैवैतद्यजमानो यद्द्वियजुषमुपदधाति येन रूपेण यत्कर्म
कृत्वेन्द्राग्नी स्वर्गं लोकमैतां तेन रूपेण तत्कर्म कृत्वा स्वर्गं लोकं
यानीति सा यद्द्वियजुर्नाम द्वे ह्येतां देवतेऽअपश्यतां यद्वेव द्वि-
यजुषमुपदधाति यजमानो वै द्वियजुः ॥१६॥ तदाहुः । यदसावेव

१. प्राणो इति. ग. २, ३. मा. सं. १३. २०. ४. मा. सं. १३. २१.

र्यजमानो योऽसौ हिरण्मयः पुरुषोऽथ कतमदस्येदꣳ रूपमि
दैवो वाऽअस्य सऽआत्मा मानुषोऽयं तद्यत्स हिरण्मयो भवत्यमृ
वाऽअस्य तद्रूपं देवरूपममृतꣳ हिरण्यमथ यदियं मृदः कृता ;
वति मानुषꣳ ह्यस्येदꣳ रूपम् ॥१७॥ स यदमूमेवोपदध्यात् । ;
मामपाशिꣳष्यात्क्षिप्रे हास्माल्लोकाद्यजमानः प्रेयादथ यदिमामपाशि
नष्टि यदेवास्येदं मानुषꣳ रूपं तदस्यैतदुपाशिनष्टि तथो हानेन
त्मना सर्व्वमायुरेति ॥१८॥ स यन्नानूपदध्यात् । न हैतं दैवमात्म
नमनुप्रजानीयादथ यदनूपदधाति तथो हैतं दैवमात्मानमनुप्रज
नाति तामनन्तर्हितां दूर्व्वेष्टकायाऽउपदधाति पशवो वै दूर्व्वेष्टक
यजमानं तत्पशुषु प्रतिष्ठापयति ॥१९॥ तदाहुः । कथमस्यैतावात्मा
नौ प्राणेन संततावव्यवच्छिन्नौ भवतऽइति प्राणो वै स्वयमातृण्ण
प्राणो दूर्व्वेष्टका यजमानो द्वियजुः स यदनन्तर्हिताꣳ स्वयमातृण्णायै
दूर्व्वेष्टकामुपदधाति प्राणेनैव तत्प्राणꣳ सन्तनोति सन्दधात्यथ
यदनन्तर्हितां दूर्व्वेष्टकायै द्वियजुषमुपदधाति प्राणो वै दूर्व्वेष्टका
यजमानो द्वियजुरेवमु हास्यैतावात्मानौ प्राणेन सन्ततावव्यवच्छिन्नौ
भवतः ॥२०॥ "[2]या स्तेऽअग्ने सूर्ये रुचः"। "[3]या वो देवाः सूर्ये रुच"
ऽइति रुचꣳ रुचमित्यमृतत्वं वै रुगमृतत्वमेवास्मिन्नेतद्दधाति द्वा-
भ्यामुपदधाति तस्योक्तो बन्धुरथो द्वयꣳ ह्येवैतद्रूपं मृच्चापश्च साद-
यित्वा सूददोहसाधिवदति तस्योक्तो बन्धुः ॥२१॥ अथ रेतःसिचा-
ऽउपदधाति । इमौ वै लोकौ रेतःसिचाविमौ ह्येव लोकौ रेतः
सिञ्चतऽइतो वाऽअयमूर्द्ध्वꣳ रेतः सिञ्चति धूमꣳ सामुत्र वृष्टिर्भ-
वति तामसावमुतो वृष्टिं तदिमाऽअन्तरेण प्रजाः प्रजायन्ते तस्मा-
दिमौ लोकौ रेतःसिचौ ॥२२॥ "[4]विराड्ज्योतिरधारयदि"ति ।
अयं वै लोको विराट् सऽइममग्निं ज्योतिर्धारयति "[5]स्वराड्ज्योति-

---

१. दध्यात् इति. ग. २. मा. सं. १३. २२.
३. मा. सं. १३. २३. ४, ५. मा. सं. १३. २४

ऽधारयदि"त्यसौ वै लोकः स्वराट् सोऽमुमादित्यं ज्योतिर्द्धारयति
व्विराट्च हेमौ लोकौ स्वराट्च नानोपदधाति नाना हीमौ लोकौ
सकृत्सादयति समानं तत्करोति तस्मादु हानयोर्लोकयोरन्ताः समा-
गन्ति ॥२३॥ व्यद्धेव रेतःसिचाऽउपदधाति । आण्डौ वै रेतःसिचौ
यस्य ह्याण्डौ भवतः सऽएव रेतः सिञ्चति व्विराड्ज्योतिरधारय-
स्वराड्ज्योतिरधारयदिति व्विराट्च हेमावाण्डौ स्वराट्च तावेत-
ज्योतिर्द्धारयतो रेतऽएव प्रजातिमेव नानोपदधाति नाना हीमावाण्डौ
सकृत्सादयति समानं तत्करोति तस्मात्समानसम्बन्धनौ तेऽअन-
तर्हिते व्रियजुषऽउपदधाति व्यजमानो वै व्रियजुरनन्तर्हितौ तद्य-
मानादाण्डौ दधाति ॥२४॥ अथ व्विश्वज्योतिषमुपदधाति । अग्नि-
र्वै प्रथमा व्विश्वज्योतिरग्निर्ह्यैवास्मिँल्लोके व्विश्वं ज्योतिरग्निमेवै-
दुपदधाति तामनन्तर्हिताᳯं रेतःसिग्भ्यामुपदधातीमौ वै लोकौ
तःसिचावनन्तर्हितं तदाभ्यां लोकाभ्यामग्निं दधात्यन्तरेवोपदधा-
यन्तरेव हीमौ लोकावग्निः ॥२५॥ व्यद्धेव व्विश्वज्योतिषमुपदधाति ।
जा वै व्विश्वज्योतिः प्रजा ह्येव व्विश्वं ज्योतिः प्रजननमेवैतदुप-
धाति तामनन्तर्हिताᳯं रेतःसिग्भ्यामुपदधात्याण्डौ वै रेतः सि-
ावनन्तर्हितां तदाण्डाभ्यां प्रजातिं दधात्यन्तरेवोपदधात्यन्तरेव
ाण्डौ प्रजाः प्रजायन्ते ॥२६॥ "प्रजा[1]पतिष्ट्वा सादयत्वि"ति ।
जापतिर्ह्येतां प्रथमां चितिमपश्यत् "पृष्ठे पृथिव्या ज्योतिष्मतीमि"ति
ष्ठे ह्ययं पृथिव्यै ज्योतिष्मानग्निः ॥२७॥ "व्विँश्वस्मै प्राणायापा-
ाय । व्यानाये"ति प्राणो वै व्विश्वज्योतिः सर्व्वस्माऽउ वाऽएत-
े प्राणो "व्विँश्वं ज्योतिर्यच्छे"ति सर्व्वं ज्योतिर्यच्छेत्येतद-
ग्निष्टेऽधिपति"रित्यग्निमेवास्याऽअधिपतिं करोति सादयित्वा सूद-
ोहसाधिवदति तस्योक्तो बन्धुः ॥२८॥ अथर्त्तव्येऽउपदधाति । ऋ-
वऽएते व्यदृतव्येऽऋतूनेवैतदुपदधाति "मधुँश्च माधवश्च व्वासन्ति-
ावृतू"ऽइति नामनीऽएनयोरेते नामभ्यामेवैनेऽएतदुपदधाति द्वेऽ-

१ प्रजापतिमिति. अ. २-६. मा. सं. १३.२४. ७. मा. सं. १३.२५.

इष्टके भवतो द्वौ हि मासावृतुः सकृत्सादयत्येकं तदृतुं करोति ॥२९॥
तद्यदेतेऽअत्रोपदधाति । संवत्सरऽएषोऽग्निरिमऽउ लोकाः संवत्स-
रस्तस्यायमेव लोकः प्रथमा चितिरयमस्य लोको वसन्तऽऋतुस्त-
द्यदेतेऽअत्रोपदधाति यदेवास्यैतेऽआत्मनस्तदस्मिन्नेतत्प्रतिदधाति
तस्मादेतेऽअत्रोपदधाति ॥३०॥ यद्वेवैतेऽअत्रोपदधाति । प्रजापति-
रेषोऽग्निः संवत्सरऽउ प्रजापतिस्तस्य प्रतिष्ठैव प्रथमा चितिः प्रति-
ष्ठोऽअस्य वसन्तऽऋतुस्तद्यदेतेऽअत्रोपदधाति यदेवास्यैतेऽआत्म-
नस्तदस्मिन्नेतत्प्रतिदधाति तस्मादेतेऽअत्रोपदधाति तेऽअनन्तर्हिते
विश्वज्योतिषऽउपदधाति प्रजा वै विश्वज्योतिरनन्तर्हितास्तत्प्रजा
ऽऋतुभ्यो दधाति तस्मात्प्रजाऽऋतूनेवानुप्रजायन्तऽऋतुभिर्हीव गर्भे
सन्तꣳसम्पश्यन्त्यृतुभिर्जातम् ॥३१॥ अथाषाढामुपदधाति । इयं
वाऽअषाढेमामेवैतदुपदधाति तां पूर्वार्द्धऽउपदधाति प्रथमा हीयम-
सृज्यत ॥३२॥ सा यदषाढा नाम । देवाश्चासुराश्चोभये प्राजाप-
त्याऽअस्पर्द्धन्त ते देवाऽएतामिष्टकामपश्यन्नषाढामिमामेव तामुपादधत
तामुपधायासुरान्त्सपत्नान् भ्रातृव्यानस्मात्सर्व्वस्मादसहन्त यदस-
हन्त तस्मादषाढा तथैवैतद्यजमानऽएतामुपधाय द्विषन्तं भ्रातृव्यम-
स्मात्सर्व्वस्मात्सहते ॥३३॥ यद्वेवाषाढामुपदधाति । वाग्वाऽअ-
षाढा वाचैव तद्देवाऽअसुरान्त्सपत्नान्भ्रातृव्यानस्मात्सर्व्वस्मादस-
हन्त तथैवैतद्यजमानो वाचैव द्विषन्तं भ्रातृव्यमस्मात्सर्व्वस्मात्सहते
वाचमेव तद्देवाऽउपादधत तथैवैतद्यजमानो वाचमेवोपधत्ते ॥३४॥
सेयं वामभृत् । प्राणा वै वामं यद्धि किञ्च प्राणीयं तत्सर्व्वं बिभर्त्ति
तेनेयं वामभृद्वाग्घ त्वेव वामभृत्प्राणा वै वामं वाचि वै प्राणेभ्यो-
ऽन्नं धीयते तस्माद्वाग्वामभृत् ॥३५॥ तऽएते सर्व्वे प्राणा यदषाढा ।
तां पूर्वार्द्धऽउपदधाति पुरस्तात्तत्प्राणान्दधाति तस्मादिमे पुरस्ता-
त्प्राणास्तान्नान्यया यजुष्मत्येष्टकया पुरस्तात्प्रत्युपदध्यादेतस्यां
चितौ नेत्प्राणानपिदधानीति ॥३६॥ यद्वपस्याः पञ्च पुरस्तादुपद-
धाति । अन्नं वाऽआपोऽनपिहिता वाऽअन्नेन प्राणास्तामनन्तर्हिता-

तव्याभ्यामुपदधात्यृतुषु तद्वाचं प्रतिष्ठापयति सेयं व्वागृतुषु प्रति-
ता व्वदति ॥३७॥ तदाहुः । यत्प्रजा व्विश्वज्योतिर्व्वागषाढाथ
स्मादन्तरेणर्त्तव्ये ऽउपदधातीति संवत्सरो वा ऽऋतव्ये संवत्सरेण
प्रजाभ्यो व्वाचमन्तर्द्दधाति तस्मात्संवत्सरवेलायां प्रजा व्वाचं प्रव-
न्ते ॥३८॥ "अषाढासि सहमाने"ति । असहन्त ह्येतया देवा ऽ-
सुरा"न्त्सहस्वारातीः सहस्व पृतनायत" ऽइति यथैव यजुस्तथा
धुः "सहस्रवीर्यासि सा मा जिन्वे"ति सर्व्वं वै सहस्रꣳसर्व्व-
र्यासि सा मा जिन्वेत्येतत्सादयित्वा सूददोहसाधिवदति तस्योक्तो
धुः ॥३९॥ तदाहुः । कस्मादभिस्वयमातृण्णमन्या ऽइष्टका ऽउप-
धन्ते प्राच्य ऽएता ऽइति द्वौ वै योनी ऽइति ब्रूयाद्देवयोनिरन्यो
ष्ययोनिरन्यः प्राचीनप्रजनना वै देवाः प्रतीचीनप्रजनना मनु-
स्तद्यदेताः प्राचीरुपदधाति देवयोनेरेवैतद्यजमानं प्रजनयति ॥४०॥
. का. श. ९. ४. १; तै. सं. ५. २. ८; मै. सं. ३. २. ६, ७.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे सप्तमकाण्डे
तृतीयप्रपाठके द्वितीयं ब्राह्मणम् ॥ ( अ.४.२. )

तृतीयः प्रपाठकस्समाप्तः ॥

( कण्डिकासंख्या ८५ )

( चतुर्थोऽध्यायः )

अथ चतुर्थः प्रपाठकः

७. ४. १.

( कूर्माद्युपधानम् )

कूर्म्ममुपदधाति । रसो वै कूर्म्मो रसमेवैतदुपदधाति यो वै
एषां लोकानामप्सु प्रविद्धानां पराङ्रसो ऽत्यक्षरत्स ऽएष कूर्म्मस्त-

---

१-३. मा. सं. १३. २६.    ४. सर्वं इति. ग.

मेवैतदुपदधाति यावानु वै रसस्तावानात्मा सऽएषऽइमऽएव
॥१॥ तस्य यदधरं कपालम्। अयᳬ स लोकस्तत्प्रतिष्ठितमि
प्रतिष्ठितऽइव ह्ययं लोकोऽथ यदुत्तरᳯ सा द्यौस्तद्व्यवगृ
मिव भवति व्यवगृहीतान्तेव हि द्यौरथ यदन्तरा तदन्तरि
एषऽइमऽएव लोकाऽइमानेवैतल्लोकानुपदधाति ॥२॥ तमभ्य
दध्ना मधुना घृतेन दधि हैवास्य लोकस्य रूपं[1] घृतमन्त
मध्वमुष्य स्वेनैवैनमेतद्रूपेण समर्द्धयत्यथो दधि हैवास्य
रसो घृतमन्तरिक्षस्य मध्वमुष्य स्वेनैवैनमेतद्रसेन समर्द्धयति
"मधु[2] व्वाता ऋतायत"ऽइति। यां वै देवतामृगभ्यनूक्ता य
सैव देवता सर्क्सा देवता तद्यजुस्तद्धैतन्मध्वेवैष त्रिचो
मधु रसमेवास्मिन्नेतद्दधाति गायत्रीभिस्तिसृभिस्तस्योक्तो बन्
स यत्कूर्मो नाम। एतद्वै रूपं कृत्वा प्रजापतिः प्रजाऽअसृज
सृजताकरोत्तद्यदकरोत्तस्मात्कूर्मः कश्यपो वै कूर्मस्तस्मादाहुः
प्रजाः काश्यप्यऽइति ॥५॥ स यः स कूर्मोऽसौ सऽआ
अमुमेवैतदादित्यमुपदधाति तं पुरस्तात्प्रत्यञ्चमुपदधात्यमुं त
पुरस्तात्प्रत्यञ्चं दधाति तस्मादसावादित्यः पुरस्तात्प्रत्यङ्
दक्षिणतोऽषाढायै व्वृषा वै कूर्मो योषाऽषाढा दक्षिणतो वै
योषामुपशेतेऽरत्निमात्रेऽरत्निमात्राद्धि व्वृषा योषामुपशेते सै
व्वासामिष्टकानां महिषी यदषाढैतस्यै दक्षिणतः सन्त्सर्व्वास
कानां दक्षिणतो भवति ॥६॥ यद्वेव कूर्ममुपदधाति। प्राणो वै
प्राणो हीमाः सर्व्वाः प्रजाः करोति प्राणमेवैतदुपदधाति तं पु
त्प्रत्यञ्चमुपदधाति पुरस्तात्तत्प्रत्यञ्चं प्राणं दधाति तस्मात्पुर
त्यङ् प्राणो धीयते पुरुषमभ्यावृत्तं यजमाने तत्प्राणं दधाति द
तोऽषाढायै प्राणो वै कूर्मो व्वागषाढा प्राणो वै व्वाचो व्वृषा
मिथुनम् ॥७॥ (शतम् ४२००) "अपां[3] गम्भन्त्सीदे"ति। एत

१. रूपं इति. ग. २. मा. सं. १३. २७. ३ मा. सं. १३. ३

गस्मिन्थ्ठं सन्नैषऽएतत्तपति "मा त्वा सूर्योऽभितापसीन्माग्निर्व्वैश्वानर" ऽइति मैव त्वा सूर्यो हिथ्ठंसीन्मोऽअग्निर्व्वैश्वानरऽइत्येत "दच्छिन्नपत्राः प्रजाऽअनुवीक्षस्वे"तीमा वै सर्व्वाः प्रजा यऽइमाऽइष्टकास्ताऽअरिष्टाऽअनार्त्ताऽअनुवीक्षस्वेत्येतद् "नु त्वा दिव्या वृष्टिः सचतामि"ति यथैवैनं दिव्या वृष्टिरनुसचेतैवमेतदाह ॥८॥ अथैनमेजयति । "त्रीन्त्समुद्रान्त्समसृपत्स्वर्गानि"तीमे वै त्रयः समुद्राः स्वर्ग्गा लोकास्तानेष कूर्म्मो भूत्वानुसꣳससर्प्पा "पां पतिर्व्वृषभऽइष्टकानामि"त्यपाꣳ ह्येष पतिर्व्वृषभऽइष्टकानां "पुरीषं व्वसानः सुकृतस्य लोक"ऽइति पशवो वै पुरीषं पशून्वसानः सुकृतस्य लोकऽइत्येत "त्तत्र गच्छ यत्र पूर्व्वे परेता"ऽइति तत्र गच्छ यत्रैतेन पूर्व्वे कर्म्मणेयुरित्येतत् ॥९॥ "मही द्यौः पृथिवी च न"ऽइति । महती द्यौः पृथिवी च नऽइत्येतदि "मं यज्ञं मिमिक्षतामि"तीमं यज्ञमवतामित्येत "त्पिपृतां नो भरीमभि"रिति बिभृतां नो भरीमभिरित्येतद्द्यावापृथिव्ययोत्तमयोपदधाति द्यावापृथिव्यो हि कूर्म्मः ॥१०॥ त्रिभिरुपदधाति । त्रयऽइमे लोकाऽअथो त्रिवृदग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतदुपदधाति त्रिभिरभ्यनक्ति तत्षट्तस्योक्तो बन्धुरवकाऽअधस्ताद्भवन्त्यवकाऽउपरिष्टादापो वाऽअवका अपामेवैनमेतन्मध्यतो दधाति सादयित्वा सूददोहसाधिवदति तस्योक्तो बन्धुः॥११॥ अथोलूखलमुसलेऽउपदधाति । विष्णुरकामयतान्नादः स्यामिति सऽएतेऽइष्टकेऽअपश्यदुलूखलमुसले तेऽउपाधत्त तेऽउपधायान्नादोऽभवत्तथैवैतद्यजमानो यदुलूखलमुसलेऽउपदधाति येन रूपेण यत्कर्म्म कृत्वा विष्णुरन्नादोऽभवत्तेन रूपेण तत्कर्म्म कृत्वान्नादोऽसानीति तदेत्सर्व्वमन्नं यदुलूखलमुसलेऽउलूखलमुसलाभ्याꣳ ह्येवान्नं क्रियतऽउलूखलमुसलाभ्यामद्यते ॥१२॥ ते रेतः सिचोर्व्वेलयोपद-

---

१-३. मा. सं. १३. ३०　४. एतदाह इति. ज. ५-८. मा. सं. १३. ३१.
९-११. मा. सं. १३. ३२.　१२. अपामिति. ख.

धाति । पृष्ट्यो वै रेतःसिचौ मध्यमु पृष्ट्यो मध्यतऽएवास्मिन्नेतदन्नं दधात्युत्तरेऽउत्तरमेवास्मादेतदन्नं दधात्यरत्निमात्रेऽरत्निमात्राद्ध्यन्नम-द्यते ॥१३॥ प्रादेशमात्रे भवतः । प्रादेशमात्रो वै, गर्भो विष्णुरन्न-मेतदात्मसम्मितमेवास्मिन्नेतदन्नं[1] दधाति यद्दु वाऽआत्मसम्मितमन्नं तदवति तन्न हिनस्ति यद्भूयो हिनस्ति तद्यत्कनीयो न तदवति॥१४॥ औदुम्बरे भवतः । ऊर्ग्वै रसऽउदुम्बरऽऊर्ज्जमेवास्मिन्नेतद्रसं दधा-त्यथो सर्व्वऽएते व्वनस्पतयो यदुदुम्बरे[2] एतेऽउपदधत्सर्व्वान्व्वनस्प-तीनुपधाति रेतः सिचोर्व्वेलयेमे वै रेतःसिचावनयोस्तद्वनस्पती-न्दधाति तस्मादनयोर्व्वनस्पतयश्चतुःस्राक्ति भवति चतस्रो वै दिशः सर्व्वासु तद्दिक्षु व्वनस्पतीन्दधाति तस्मात्सर्व्वासु दिक्षु व्वनस्पतयो मध्ये संगृहीतं भवत्युलूखलरूपतायै ॥१५॥ यद्वेवोलू-खलमुसलेऽउपदधाति । प्रजापतेर्व्विस्रस्तात्प्राणो मध्यतऽउदचिक्र-मिषत्तमन्नेनागृह्णात्तस्मात्प्राणोऽन्नेन गृहीतो यो ह्येवान्नमत्ति स प्रा-णिति ॥१६॥ प्राणे गृहीते । अस्मादन्नमुदचिक्रमिषत्तत्प्राणेनागृह्णा-त्तस्मात्प्राणेनान्नं गृहीतं यो ह्येव प्राणिति सोऽन्नमत्ति ॥१७॥ एतयोरुभयोर्गृहीतयोः । अस्मादूर्गुदचिक्रमिषत्तामेताभ्यामुभाभ्याम-गृह्णात्तस्मादेताभ्यामुभाभ्यामूर्ग्गृहीता यो ह्येवान्नमत्ति स प्राणिति तमूर्ज्जयति ॥१८॥ ऊर्जि गृहीतायाम् । अस्मादेतेऽउभेऽउदचिक्रमिषतां तेऽऊर्ज्जागृह्णात्तस्मादेतेऽउभेऽऊर्ज्जा[3] गृहीते यँ ह्येवोर्ज्जयति स[4] प्राणिति सोऽन्नमत्ति ॥१९॥ तान्येतान्यन्योन्येन गृहीतानि[5] । ता-न्यन्योन्येन गृहीत्वात्मन्प्रापादयत तदेतदन्नं प्रपद्यमानँ[6] सर्व्वै देवाऽअनुप्रापद्यन्तान्नजीवनँ हीदँ सर्व्वम् ॥२०॥ तदेष श्लोकोऽ-भ्युक्तः । तद्वै स प्राणोऽभवदिति तद्धि स प्राणोऽभवन्महान् भूत्वा प्रजापतिरिति महान्हि स तदभवद्यदेनमेते देवाः प्रापद्यन्त भुजो

---

१. दर्भं दधाति इति. ग.  २. उदुम्बर इति. अ.  ३. ऊर्जा इति. ग.
४. स इति. ग.  ५. गृहीतानि इति. ग.  ६. प्रपद्यमा इति अ.

जिष्या वित्त्वेति प्राणा वै भुजोऽन्नं भुजिष्याऽएतत्सर्वं वित्त्वेत्ये-
त्प्राणान्प्राणयत्पुरीत्यात्मा वै पूर्य्यङ्ग्रे प्राणान्प्राणयत्तस्मात्प्राणा
ऽअथ य्यत्प्रजापतिः प्राणयत्तस्मादु प्रजापतिः प्राणो सो वै स
ऽएषा सा गायत्र्यथ यत्तदन्नमेष स विष्णुर्देवताथ या सोगैष स
दुम्बरः ॥२१॥ सोऽब्रवीत्। अयं वाव मा सर्व्वस्मात्पाप्मनऽ-
भार्षीदिति यदब्रवीदुद्भार्षीन्मेति तस्मादुदुम्भरऽउदुम्भरो ह वै
दुम्बरऽइत्याचक्षते परोक्षं परोक्षकामा हि देवाऽउरु मे करदिति
ादुरूकरमुरूकरꣳ ह वै तदुलूखलमित्याचक्षते परोक्षं परोक्ष-
ा हि देवाः सैषा सर्व्वेषां प्राणानां य्योनिर्य्यदुलूखलꣳ शिरो वै
ाणानां य्योनिः ॥२२॥ तत्प्रादेशमात्रं भवति। प्रादेशमात्रमिव हि
श्चतुःस्रक्ति भवति चतुःस्रक्तीव हि शिरो मध्ये संगृहीतं भवति
ये सङ्गृहीतमिव हि शिरः ॥२३॥ तं य्यत्र देवाः समस्कुर्व्वन्।
स्मिन्नेतत्सर्व्वं मध्यतोऽदधुः प्राणमन्नमूर्ज्जं तथैवास्मिन्नयमेतद्-
ते रेतःसिचोर्व्वेलया पृष्ट्यो वै रेतःसिचौ मध्यमु पृष्ट्यो मध्य-
एवास्मिन्नेतत्सर्व्वं दधाति ॥२४॥ "विष्णोः कर्माणि पश्यत"
। र्व्वीर्यं वै कर्म्म विष्णोर्व्वीर्य्याणि पश्यतेत्येत"द्युतो व्व्रतानि
पश"ऽइत्यन्नं वै व्व्रतं यतोऽन्नꣳ स्पाशयाञ्चक्रऽइत्येतदि "न्द्रस्य
ज्यः सखे"तीन्द्रस्य ह्येष य्युज्यः सखा द्विदेवत्ययोपदधाति द्वे
लूखलमुसले सकृत्सादयति समानं तत्करोति समानꣳ ह्येतदन्नमेव
दयित्वा सूददोहसाधिवदति तस्योक्तो बन्धुः ॥२५॥ अथोखामु-
धाति। य्योनिर्व्वाऽउखा य्योनिमेवैतदुपदधाति तामुलूखलऽउप-
ात्यन्तरिक्षं वाऽउलूखलं यद्धि किञ्चास्याऽऊर्ध्वमन्तरिक्षमेव तन्मध्यं
ऽअन्तरिक्षं मध्यतस्तद्योनिं दधाति तस्मात्सर्व्वेषां भूतानां मध्यतो
ोनिरपि व्वनस्पतीनाम् ॥ २६ ॥ य्यद्वेवोखामुपदधाति । यो
स प्रजापतिर्व्यस्रꣳसतैषा सोखेमे वै लोकाऽउखेमे लोकाः

---

१. उरुकरमुरु इति अ २-३. मा. सं. १३. ३३.

प्रजापतिस्तामुलूखलऽउपदधाति तदेनमेतस्मिन् सर्व्वस्मिन्प्रतिष्ठापय
ति प्राणेऽन्नऽऊर्ज्यथोऽएतस्मादेवैनमेतत्सर्व्वस्मादनन्तर्हितं दधाति
॥२७॥ अथोपशयां पिष्ट्वा । लोकभाजमुखां कृत्वा पुरस्तादुखाया
उपनिवपत्येष हैतस्यै लोकस्तथो हास्यैषानन्तारिता भवति ॥२८
तदाहुः । कथमस्यैषा पक्वा शृतोपहिता भवतीति य्यदेव य्यु
ष्कृता तेनाथो यद्धै किञ्चैतमाग्निं व्वैश्वानरमुपानिगच्छाति ततऽए
तत्पक्वꣳ शृतमुपहितं भवति ॥२९॥ "ध्रुवासि धरुणे"ति । तस्यो
क्तो बन्धुरि"तो जज्ञे प्रथममेभ्यो य्योनिभ्योऽअधि जातवेदा"ऽ
त्येतेभ्यो हि य्योनिभ्यः प्रथमं जातवेदाऽअजायत "स गायत्र्या त्रि
भानुष्टुभा च देवेभ्यो हव्यं व्वहतु प्रजानन्नि"त्येतैर्व्वाऽएष छन्द
भिर्द्देवेभ्यो हव्यं व्वहति प्रजानन् ॥३०॥ "इषे राये रमस्व । सह
द्युम्नऽऊर्जेऽअपत्याये"त्येतस्मै सर्व्वस्मै रमस्वेत्येत"त्सम्राडसि स्व
राडसी"ति सम्राट्च ह्येष स्वराट्च "सारस्वतौ त्वोत्सौ प्रावताम
ति मनो वै सरस्वान्वाक्सरस्वत्येतौ सारस्वताऽउत्सौ तौ त
प्रावतामित्येतद्द्वाभ्यामुपदधाति तस्योक्तो बन्धुरथो द्वयꣳ ह्येवैत
मृच्चापश्च सादयित्वा सूददोहसाधिवदति तस्योक्तो बन्धुः ॥३
अथैनामभिजुहोति । एतद्वाऽअस्यामेतत्पूर्व्वꣳ रेतः सिक्तं भव
सिकतास्तदेतदभिकरोति तस्माद्योनौ रेतः सिक्तमभिक्रियतऽआज्ये
जुहोति स्रुवेण स्वाहाकारेण द्वाभ्यामाग्नेयीभ्यां गायत्रीभ्यां तस्यो
बन्धुः ॥३२॥ "अग्ने युक्ष्वा हि ये तव" । "य्युक्ष्वा हि देवहूतम
नि"ति य्युक्तवतीभ्यामिदमेवैतद्योनौ रेतो य्युनक्ति तस्माद्योनौ रे
य्युक्तं न निष्पद्यते ॥३३॥ स य्यदि सम्वत्सरभृतः स्यात् । अ
भिजुहुयात्सर्व्वं वै तद्यत्संवत्सरभृतः सर्व्वं तद्यदभिजुहोत्यथ य
संवत्सरभृतः स्यादुपैव तिष्ठेतासर्व्वं वै तद्यदसंवत्सरभृतोऽस

१-३. मा. सं. १३. ३४. ४-६. मा. सं. १३. ३५. ७. मा. सं. १३.
८. मा. सं. १३. ३७. ९. यद्यत्संवत्सर इति. ग, ज.

तद्यदुपतिष्ठतेऽभित्वेव जुहुयात् ॥३४॥ पशुरेष यदग्निः । सोऽत्रैव सर्व्वः कृत्स्नः संस्कृतस्तस्यावाङ् प्राणः स्वयमातृण्णा श्रोणी द्वियजुः पृष्टयो रेतःसिचौ कीकसा विश्वज्योतिः ककुदमृतव्ये ग्रीवाऽअषाढा शिरः कूर्मो यद्ये कूर्मे प्राणा यद्ये शीर्षन्प्राणास्ते ते ॥३५॥ तं व्राऽएतम् । इतऽऊर्ध्वं प्राञ्चं चिनोत्यसौ वाऽआदित्यऽएषोऽग्निरमुं तदादित्यमितऽऊर्ध्वं प्राञ्चं दधाति तस्मादसावादित्यऽइतऽऊर्ध्वः प्राङ् धीयते[1] ॥३६॥ अथैनं प्रसलव्यावर्त्तयति । अमुं तदादित्यं प्रसलव्यावर्त्तयति तस्मादसावादित्यऽइमांल्लोकान्प्रसलव्यनुपर्य्येति ॥३७॥ उदरमुखा । योनिरुलूखलमुत्तरोखा भवत्यधरमूलूखलमुत्तरᳬ हु-दरमधरा योनिः शिश्नं मुसलं तद्वृत्तमिव भवति वृत्तमिव हि शिश्नं[2] तद्दक्षिणतऽउपदधाति दक्षिणतो वै वृषा योषामुपशेते यदु पशोः संस्कृतस्यान्नं तद्दूर्व्वेष्टका तस्य वाऽएतस्योत्तरोऽर्द्धऽउदाहिततरो भवति पशुरेष यदग्निस्तस्मात्पशोः सुहितस्योत्तरः कुक्षिरुन्नततरो भवति ॥३८॥ Cf. का. श. ९. ४. २; तै. सं. ५. २. ९; मै. सं. ३. २. ९; काठ. सं. २०. ६, ७. कपि. ३२. ८, ९.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे सप्तमकाण्डे
चतुर्थप्रपाठके प्रथमं ब्राह्मणम् ॥ ( अ. ५. १. )

७. ४. २.

( पशुमस्तकाद्युपधानम् )

पशुशीर्षाण्युपदधाति । पशवो वै पशुशीर्षाणि पशूनेवैतदुपदधाति तान्युखायामुपदधातीमे वै लोकाऽउखा पशवः पशुशीर्षाण्येषु तल्लोकेषु पशून्दधाति तस्मादिमऽएषु लोकेषु पशवः ॥१॥ यद्वेवोखायाम् । योनिर्व्वाऽउखा पशवः पशुशीर्षाणि योनौ तत्पशून्प्रतिष्ठापयति तस्माद्द्यमानाः पच्यमानाः पशवो न क्षीयन्ते योनौ ह्येनान्प्रतिष्ठापयति ॥२॥ यद्वेव[3] पशुशीर्षाण्युपदधाति । या वै ताः

---

१. धीयते इति. ग, ख, न. २. शिश्नं इति. ख. ३. यद्वेव इति. ग.

श्चियऽएतानि तानि पशुशीर्षाण्यथ यानि तानि कुसिन्धान्येता
न्याः पञ्चचितयस्तद्यास्ताः पञ्च चितयऽइमे ते लोकास्तद्ये तऽइमे
लोकाऽएषा सोखा तद्यदुखायां पशुशीर्षाण्युपदधात्येतैरेव तच्छी·
र्षभिरेतानि कुसिन्धानि सन्दधाति ॥३॥ तान्पुरस्तात्प्रतीचऽउप·
दधाति । एतद्वै यत्रैतान्प्रजापतिः पशूनालिप्सत तऽआलिप्स्य-
माना ऽउदचिक्रमिषंस्तान्प्राणेषु समगृह्णात्तान्प्राणेषु संगृह्य पुरस्ता·
त्प्रतीचऽआत्मन्नधत्त ॥४॥ तद्वाऽएतत्क्रियते । यद्देवाऽअकुर्वन्निदं
न्वस्मात्ते पशवो नोच्चिक्रमिषन्ति यत्त्वेतत्करोति यद्देवाऽअकुर्वं-
स्तत्करवाणीत्यथो प्राणेष्वेवैनानेतत्संगृह्य पुरस्तात्प्रतीचऽआत्म·
न्धत्ते ॥५॥ यद्वेव पशुशीर्षाण्युपदधाति । प्रजापतिर्व्वाऽइदमग्रऽ·
आसीदेकऽएव सोऽकामयतान्नꣳ सृजेय प्रजायेयेति स प्राणेभ्यऽ-
एवाधि पशून्निरमिमीत मनसः पुरुषं चक्षुषोऽश्वं प्राणाद्गाꣳ·
श्रोत्रादविं व्वाचोऽजं तद्यदेनान्प्राणेभ्योऽधि निरमिमीत तस्मादाहुः
प्राणाः पशवऽइति मनो वै प्राणानां प्रथमं तद्यन्मनसः पुरुषं निर-
मिमीत तस्मादाहुः पुरुषः प्रथमः पशूनां व्वीर्यवत्तमऽइति मनो वै
सर्व्वे प्राणा मनसि हि सर्व्वे प्राणाः प्रतिष्ठितास्तद्यन्मनसः पुरुषं
निरमिमीत तस्मादाहुः पुरुषः सर्व्वे पशवऽ इति पुरुषस्य ह्येवैते
सर्व्वे भवन्ति ॥६॥ तदेतदन्नꣳ सृष्ट्वा । पुरस्तात्प्रत्यगात्मन्नधत्त
तस्माद्यः कश्चान्नꣳ सृजते पुरस्तादेवैनत्प्रत्यगात्मन्धत्ते तद्वाऽउ-
खायामुदरं वाऽउखोदरे तदन्नं दधाति ॥७॥ अथैषु हिरण्यशकला-
न्प्रत्यस्यति । प्राणा वै हिरण्यमथ वाऽएतेभ्यः पशुभ्यः संज्ञप्यमा-
नेभ्यऽएव प्राणाऽउत्क्रामन्ति तद्यद्धिरण्यशकलान्प्रत्यस्यति प्राणाने-
वैष्वेतद्दधाति ॥८॥ सप्त प्रत्यस्यति । सप्त वै शीर्षन्प्राणास्तानस्मि-
न्नेतद्दधात्यथ यदि पञ्च पशवः स्युः पञ्चैव कृत्वः सप्त सप्त प्रत्य-
स्येत्पञ्च वाऽएतान्पशूनुपदधाति सप्त सप्त वाऽएकैकस्मिन्पशौ प्रा-
णास्तदेषु सर्व्वेषु प्राणान्दधाति ॥९॥ तद्धैकेऽपि । यद्येकः पशुर्भ-
वति पञ्चैव कृत्वः सप्त सप्त प्रत्यस्यन्ति पञ्च वाऽएतान्पशूनुपदधाति

। सप्त वाऽएकैकस्मिन्पशौ प्राणास्तदेषु सर्व्वेषु प्राणान्दधमऽइति तथा कुर्य्यादेतस्मिन्वै पशौ सर्व्वेषां पशूनाᳬ रूपं तद्यदेतस्मिन्प्र- स्यति तदेवैषु सर्व्वेषु प्राणान्दधाति ॥१०॥ मुखे प्रथमं प्रत्यस्य- । "सम्यक्स्रवन्ति सरितो न धेना"ऽइत्यन्नं वै धेनास्तदिदᳬ- यङ्मुखमभिसᳬ स्रवत्य"न्तर्हृदा मनसा पूयमाना"ऽइत्यन्तर्व्वै येन मनसा सतान्नं पूतं ह्ययऽऋजुस्तस्य "घृतस्य धाराऽअभि- कशीमी"ति ह्या ऽएवैतस्मिन्नन्नावाहुतीर्होष्यन्भवाति ताऽएतदाह इरण्ययो व्वेतसो मध्येऽअग्ने"रिति ह्ययऽएवैष हिरण्मयः पुरुष- मेतदाह ॥११॥ "ऋचे त्वे"तीह । प्राणो वाऽऋक्प्राणेन ह्यर्चति चे त्वेती"ह प्राणो वै रुक्प्राणेन हि रोचतेऽथो प्राणाय हीदᳬ- र्वᳬ रोचते "भासे त्वे"तीह "ज्योतिषे त्वे"तीह भास्वती हीमे तिष्मती चक्षुषीऽ"अभूदिदं व्विश्वस्य भुवनस्य व्वाजिनमग्नेर्व्वै- नरस्य चे"तीहा"ग्निर्ज्योतिषा ज्योतिष्मान्रुक्मो व्वर्चसा व्वर्च्च- नि"ती ह व्विश्वावतीभ्यां व्विश्वᳬ हि श्रोत्रम् ॥१२॥

( अर्द्धप्रपाठकः ५० )

अथ पुरुषशीर्षमुद्गृह्णाति । मह्रयत्येवैनदेत"त्सहस्रदाऽअसि स्राय त्वे"ति सर्व्वं वै सहस्रᳬ सर्व्वस्य दातासि सर्व्वस्मै त्वे- त् ॥१३॥ अथैनानुपदधाति । पुरुषं प्रथमं पुरुषं तद्वीर्य्येणात्या ाति मध्ये पुरुषमभितऽइतरान्पशून्पुरुषं तत्पशूनां मध्यतोऽत्तारं ाति तस्मात्पुरुषऽएव पशूनां मध्यतोऽत्ता ॥१४॥ अश्वं चाविं त्तरतः । एतस्यां तद्दिश्येतौ पशू दधाति तस्मादेतस्यां दिश्येतौ भूयिष्ठौ ॥१५॥ गां चाजं च दक्षिणतः । एतस्यां तद्दिश्येतौ दधाति तस्मादेतस्यां दिश्येतौ पशू भूयिष्ठौ ॥१६॥ पयसि पुरु- रदधाति । पशवो वै पयो ह्ययजमानं तत्पशुषु प्रतिष्ठापयत्या-

१-४. मा. सं. १३. ३८.   ५-९. मा. सं. १३. ३९.
१०, ११. मा सं. १३. ४०.   १२. वीर्य्येणात्वा इति. ग.
१३. अश्वं इति, ञ.

"आदित्यं गर्भं पयसा समङ्ग्धी"त्यादित्यो वाऽएष गर्भो यत्पुरुषस्तं
पयसा समङ्ग्धीत्येत"त्सहस्रस्य प्रतिमां विश्वरूपमि"ति पुरुषो वै
सहस्रस्य प्रतिमा पुरुषस्य ह्येव सहस्रं भवति "परिवृङ्ग्धि हरसा
माभिमꣳस्था"ऽइति पर्येनं वृङ्ग्ध्यर्चिषा मैनꣳ हिꣳसीरित्ये-
तच्छ"तायुषं कृणुहि चीयमान"ऽइति पुरुषं तत्पशूनाꣳ शतायुं
करोति तस्मात्पुरुषऽएव पशूनाꣳ शतायुः ॥१७॥ अथोत्तरतो-
ऽश्वम् । "वातस्य जूतिमि"ति वातस्य वाऽएष जूतिर्यदश्वो
"वरुणस्य नाभिमि"ति वारुणो ह्यश्वोऽ"श्वं जज्ञानꣳ सरिरस्य
मध्य"ऽइत्यापो वै सरिरमप्सुजाऽउ वाऽअश्वः "शिशुं नदीनाꣳ
हरिमद्रिबुध्न"मिति गिरिर्वाऽअद्रिर्गिरिबुध्नाऽउ वाऽआपो"ऽग्ने
मा हिꣳसीः परमे व्योम"न्नितीमे वै लोकाः परमं व्योमैषु लो-
केष्वेनं मा हिꣳसीरित्येतत् ॥१८॥ अथ दक्षिणतो गाम् । "अज-
स्रमिन्दुमरुषमि"ति सोमो वाऽइन्दुः स हैष सोमोऽजस्रो यद्गौ-
"र्भुरण्युमि"ति भर्त्तारमित्येतद"ग्निमीडे पूर्वचित्तिं नमोभि"रि-
त्याग्नेयी वै गौः पूर्वचित्तिमिति प्राञ्चꣳ ह्यग्निमुद्धरन्ति प्राञ्चमुप-
चरन्ति "स पर्वभिर्ऋतुशः कल्पमान"ऽइति यद्वाऽएष चीयते
तदेष पर्वभिर्ऋतुशः कल्पते "गां मा हिꣳसीरदितिं विराज-
मि"ति विराड्वै गौरन्नं वै विराडन्नमु गौः ॥१९॥ अथोत्तरतोऽ-
विम् । "वरूत्रीं त्वष्टुर्वरुणस्य नाभिमि"ति वारुणी च हि त्वाष्ट्री
चावि"रविं जज्ञानाꣳ रजसः परस्मादि"ति श्रोत्रं वै परꣳ रजो दि-
शो वै श्रोत्रं दिशः परꣳ रजो "महीꣳ साहस्रीमसुरस्य माया-
मि"ति महतीꣳ साहस्रीमसुरस्य मायामित्येत"दग्ने मा हिꣳसीः
परमे व्योम"न्नितीमे वै लोकाः परमं व्योमैषु लोकेष्वेनं मा हिꣳ-
सीरित्येतत् ॥२०॥ अथ दक्षिणतोऽजम् । "यो अग्निरग्नेरध्यजा-

१–४. मा. सं. १३. ४१. ५–९. मा. सं. १३. ४२.
१०–१४. मा. सं. १३. ४३. १५, १६. मा. सं. १३. ४४. १७. रजो इति. ग.
१८, २० मा. सं. १३. ४४. १९. मायामिति. ख. २१ मा. सं. १३. ४५

ते"त्यग्निर्वाऽएषोऽग्नेरध्यजायत "शोकात्पृथिव्याऽउत वा दिव-
स्परी"ति यद्वै प्रजापतेः शोकादजायत तद्दिवश्च पृथिव्यै च शोका-
जायत "येन प्रजा विश्वकर्मा जजाने"ति वाग्वाऽअजो वाचो
प्रजा विश्वकर्म्मा जजान "तमग्ने हेडः परि ते वृणक्त्वि"ति
यथैव यजुस्तथा बन्धुः ॥२१॥ तऽएते पशवः । तान्नानोपदधाति
नाना सादयति नाना सूददोहसाधिवदति नाना ह्येते पशवः ॥२२॥
अथ पुरुषशीर्षमभिजुहोति । आहुतिर्वै यज्ञः पुरुषं तत्पशूनां यज्ञियं
करोति तस्मात्पुरुषऽएव पशूनां यजते ॥२३॥ यद्वेवैनदभिजुहोति ।
शीर्षस्तद्वीर्यं दधात्याज्येन जुहोति वज्रो वाऽआज्यं वीर्यं वै वज्रो
वीर्यमेवास्मिन्नेतद्दधाति स्रुवेण वृषा वै स्रुवो वीर्यं वै वृषा
वीर्यमेवास्मिन्नेतद्दधाति स्वाहाकारेण वृषा वै स्वाहाकारो वीर्यं
वृषा वीर्यमेवास्मिन्नेतद्दधाति त्रिष्टुभा वज्रो वै त्रिष्टुब्वीर्यं वै
वज्रो वीर्यं त्रिष्टुब्वीर्येणैवास्मिन्नेतद्वीर्यं दधाति ॥२४॥ स वाऽअ-
र्द्धर्चमनुद्रुत्य स्वाहाकरोति । अस्थि वाऽऋगिदं तच्छीर्षकपालं
वहाण्य यदिदमन्तरतः शीर्ष्णो वीर्यं तदस्मिन्दधाति ॥२५॥
थोत्तरमर्द्धर्चमनुद्रुत्य स्वाहाकरोति । इदं तच्छीर्षकपालꣳ
न्धाय यदिदमुपरिष्टाच्छीर्ष्णो वीर्यं तदस्मिन्दधाति ॥२६॥
चित्रं देवानामुदगादनीकमि"ति । असौ वाऽआदित्यऽएष पुरुष-
तदेतच्चित्रं देवानामुदेत्यनीकं "चक्षुर्मित्रस्य वरुणस्याग्ने"रित्यु
येषाꣳ हैतद्देवमनुष्याणां चक्षु"राप्रा द्यावापृथिवीऽअन्तरिक्ष"मि
युद्यन्वाऽएषऽइमाँल्लोकानापूरयति "सूर्यऽआत्मा जगतस्तस्थुषश्चे"-
एष ह्यस्य सर्व्वस्यात्मा यच्च जगद्यच्च तिष्ठति ॥२७॥ अथोत्स-
रुपतिष्ठते । एतद्वै यत्रैतान्प्रजापतिः पशूनालिप्सत तऽआलि
यमानाऽअशोचंस्तेषामेतैरुत्सर्गैः शुचं पाप्मानमपाहंस्तथैवैषामय
तदेतैरुत्सर्गैः शुचं पाप्मानमपहन्ति ॥२८॥ तद्वैके । यं यमेव

१-३. मा. सं. १३. ४५.    ४. पशव इति ख, पशव इति. ग, ज.
५. जुहोति. इति. ख, ग, ज.    ६-९ मा. सं. १३. ४६.

पशुमुपदधति तस्य तस्य शुचमुत्सृजन्ति नेच्छुचं पाप्मानमभ्युपदधामहाऽइति ते ह ते शुचं पाप्मानमभ्युपदधति याᳬं हि पूर्वस्य शुचमुत्सृजन्ति तामुत्तरेण सहोपदधाति ॥२९॥ त्रिपरिक्राममु हैकऽउपतिष्ठन्ते । ऊर्ध्वाᳬं शुचमुत्सृजामऽइति ते ह ते शुचं पाप्मानमनुयन्त्यूर्ध्वां ह्येतेन कर्मणेत्यूर्ध्वामु शुचमुत्सृजन्ति ॥३०॥ बाह्येनैवाग्निमुत्सृजेत् । इमे वै लोकाऽएषोऽग्निरेभ्यस्तल्लोकेभ्यो बहिर्द्धा शुचं दधाति बहिर्व्वेदीयं वै व्वेदिरस्यै तद्बहिर्द्धा शुचं दधात्युदङ् तिष्ठन्नेतस्याᳬं ह दिश्येते पशवस्तद्यत्रैते पशवस्तदेवैष्वेतच्छुचं दधाति ॥३१॥ पुरुषस्य प्रथममुत्सृजति । तᳬं हि प्रथममुपदधाती"[1]मं मा हिᳬंसीर्द्विपादं पशुमि"ति द्विपाद्वाऽएष पशुर्यत्पुरुषस्तं मा हिᳬंसीरित्येत"[2]त्सहस्राक्षो मेधाय चीयमान"ऽइति हिरण्यशकलैर्व्वाऽएष सहस्राक्षो मेधायेत्यन्नायेत्येत"[3]न्मयुं पशुं मेधमग्ने जुषस्वे"ति किम्पुरुषो वै मयुः किम्पुरुषमग्ने जुषस्वेत्येत"[4]त्तेन चिन्वानस्तन्वो निषीदे"त्यात्मा वै तनूस्तेन चिन्वानऽआत्मानᳬं संस्कुरुष्वेत्येत"न्मयुं ते[5] शुगृच्छतु यं द्विष्मस्तं ते शुगृच्छत्वि"ति तन्मयौ च शुचं दधाति यं च द्वेष्टि तस्मिंश्च ॥३२॥ अथाश्वस्य । "इमं मा[6] हिᳬंसीरेकशफं पशुमि"त्येकशफो वाऽएष पशुर्यदश्वस्तं मा हिᳬंसीरित्येत"[7]त्कनिक्रदं व्वाजिनं व्वा[8]जिनेष्वि"ति कनिक्रदो वाऽएष व्वाज्यु व्वाजिनेषु "गौरमा[9]रण्यमनु ते दिशामी"ति तदस्मै गौरमारण्यमनुदिशति "तेन[10] चिन्वानस्तन्वो निषीदे"ति तेन चिन्वानऽआत्मानᳬं संस्कुरुष्वेत्येत"द्गौरं ते[11] शुगृच्छतु यं द्विष्मस्तं ते शुगृच्छत्वि"ति तद्गौरे च शुचं दधाति यं च द्वेष्टि तस्मिंश्च ॥३३॥ अथ गोः । "इम[11]ᳬं साहस्रᳬं शतधारमुत्समि"ति साहस्रो वाऽएष शतधारऽउत्सो यद्गौ"र्व्यच्य[12]मानᳬं सरिरस्य मध्य"ऽइतीमे वै लोकाः सरिरमुपजीव्यमानमेषु लोकेष्वित्येत"द्घृतं[13]

---

१–४. मा.सं. १३. ४७. ५–१०. मा.सं. १३. ४८. ११–१३. मा.सं. १३. ४९

ह्यानामदितिं जनाये''ति घृतं वाऽएषादितिर्जनाय दुह्रेऽ''ग्ने मा हि-ᳫसीः परमे व्योमन्नि''तीमे वै लोकाः परमं व्योमैषु लोकेष्वेनं मा हिᳫसीरित्येत''द्गवयमारण्यमनु ते दिशामी''ति तदस्मै गवयमारण्यमनुदिशति ''तेन चिन्वानस्तन्वो निषीदे''ति तेन चिन्वानऽआत्मानᳫसंस्कुरुष्वेत्येतद् ''गवयं ते शुगृच्छतु यं द्विष्मस्तं शुगृच्छत्वि''ति तद्गवये च शुचं दधाति यं च द्वेष्टि तस्मिंश्च ॥३४॥ अथावेः । ''इममूर्णायु''मित्यूर्णावलमित्येत''द्वरुणस्य नाभि''मिति वारुणो ह्यवि''स्त्वचं पशूनां द्विपदां चतुष्पदामि''त्युभयेषाᳫ ह्येष पशूनां त्वग्द्विपदां च चतुष्पदां च ''त्वष्टुः प्रजानां प्रथमं जनित्रमि''त्येतद्ध त्वष्टा प्रथमᳫ रूपं विचकारा''ग्ने मा हिᳫसीः परमे व्योमन्नि''तीमे वै लोकाः परमं व्योमैषु लोकेष्वेनं मा हिᳫसीरित्येत''दुष्ट्रमारण्यमनु ते दिशामी''ति तदस्माऽउष्ट्रमारण्यमनुदिशति''तेन चिन्वानस्तन्वो निषीदे''ति तेन चिन्वानऽआत्मानᳫ संस्कुरुष्वेत्येत''दुष्ट्रं ते शुगृच्छतु यं द्विष्मस्तं ते शुगृच्छत्वि''ति तदुष्ट्रे च शुचं दधाति यं च द्वेष्टि तस्मिंश्च ॥३५॥ अथाजस्य । ''अजो ह्यग्नेरजनिष्ट शोकादि''ति यद्वै प्रजापतेः शोकादजायत तदग्नेः शोकादजायत ''सोऽअपश्यज्जनितारमग्र'' ऽइति प्रजापतिर्वै जनिता सोऽपश्यत्प्रजापतिमग्रऽइत्येत''त्तेन देवा देवतामग्रमायन्नि''ति वाचाऽअजो वाचो वै देवा देवतामग्रमायं''स्तेन रोहमायन्नुप मेध्यास''ऽइति स्वर्गो वै लोको रोहस्तेन स्वर्गं लोकमायन्नुपमेध्याऽइत्येत''च्छरभमारण्यमनु ते दिशामी''ति तदस्मै शरभमारण्यमनुदिशति ''तेन चिन्वानस्तन्वो निषीदे''ति तेन चिन्वान ऽआत्मानᳫ संस्कुरुष्वेत्येत''च्छरभं ते शुगृच्छतु यं द्विष्मस्तं ते शुगृच्छत्वि''ति तच्छरभे च शुचं दधाति यं च द्वेष्टि तस्मिंश्च ॥३६॥ तदाहुः । यां वै तत्प्रजापतिरेतेषां पशूनाᳫ शुचं पाप्मा-

१—४. मा. सं. १३. ४९. ५—१२. मा. सं. १३. ५०.
१३. तस्मिंश्च इति. ख, ग, ज. १४—२०. मा. सं. १३. ५१.

नमपाहंस्तऽएते पञ्च पशवोऽभवंस्तऽएतऽउत्क्रान्तमेधाऽअमेध्याः अयज्ञियास्तेषां ब्राह्मणो नाश्नीयात्तानेतस्यां दिशि दधाति तस्मादेतस्यां दिशि पर्ज्जन्यो न व्वर्षुको य्यत्रैते भवन्ति ॥३७॥ प्रत्येत्याग्निमुपतिष्ठते । एतद्वाऽएतदयथायथं करोति य्यदग्नौ सामिचितं बर्हिर्वेदोति तस्माऽएवैतन्निह्नुतेऽहिंꣳसायाऽआग्नेय्याग्नयऽएवैतन्निह्नुते गायत्र्या गायत्रोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवास्माऽएतन्निह्नुतेऽनिरुक्तया सर्व्वं वाऽअनिरुक्तꣳ सर्व्वेणैवास्माऽएतन्निह्नुते य्यविष्ठवत्यैतद्धास्य प्रियं धाम यद्यविष्ठऽइति ह्येष ...ऽइदꣳसर्व्वमयुक्त तस्माद्यविष्ठः ॥३८॥ "त्वं यविष्ठ दाशुष"ऽइति य्यजमानो वै दाश्वान् "नॄः पाही"ति मनुष्या वै नरः "शृणुधी गिर" ऽइति शृणु नऽइमाꣳ स्तुतिमित्येत "द्रक्षा तोकमुत त्मने"ति प्रजा वै तोकꣳ रक्ष प्रजां चात्मानं चेत्येतत् ॥३९॥ आरुह्याग्निं जघनेन स्वयमातृण्णां परीत्यापस्याऽउपदधाति । आप एता य्यदपस्याऽअथ वाऽएतेभ्यः पशुभ्यः ऽआपऽउत्क्रान्ता भवन्ति तद्यदपस्याऽउपदधात्येष्वेवैतत्पशुष्वपो दधात्यनन्तर्हिताः पशुभ्य ऽउपदधात्यनन्तर्हितास्तत्पशुभ्योऽपो दधाति पञ्च पञ्चोपदधाति पञ्च ह्येते पशवः सर्व्वत ऽउपदधाति सर्व्वत ऽएवैष्वेतदपो दधाति ॥४०॥ तद्याः पञ्चदश पूर्वाः । ता ऽअपस्या व्वज्रो वाऽआपो व्वज्रः पञ्चदशस्तस्माद्येनापो यन्त्यपैव तत्र पाप्मानं घ्नन्ति व्वज्रो हैव तस्यार्द्धस्य पाप्मानमपहन्ति तस्माद्वर्षत्यप्रावृतो व्व्रजेदयं मे व्वज्रः पाप्मानमपहनदिति ॥४१॥ अथ याः पञ्चोत्तराः । ताश्छन्दस्याः पशवो वै छन्दाꣳस्यन्नं पशवोऽन्नमु पशोर्माꣳसमथ वाऽएतेभ्यः पशुभ्यो माꣳसान्युत्क्रान्तानि भवन्ति तद्यच्छन्दस्या ऽउपदधात्येष्वेवैतत्पशुषु माꣳसानि दधात्यनन्तर्हिताः पशुभ्यऽउपदधात्यनन्तर्हितानि तत्पशुभ्यो माꣳसानि दधात्यनन्तराऽ अपस्या भवन्ति बाह्याश्छन्दस्या ऽअन्तरा

१. यदग्नौ इति ख. २—५. मा. सं. १३. ५२. ६. व्रजेदयं इति. ख.

ो बाह्यानि मा॒ꣳसानि ॥४२॥ तदाहुः । य्यदिमाऽआप ऽएतानि
ꣳसान्यथ क्व त्वक् लोमेत्यन्नं वाव पशोस्त्वगन्नं लोम तद्यच्छन्द-
ऽउपदधाति सैव पशोस्त्वक्तल्लोमाथो यान्यमूून्युखायामजलोमानि
ने लोमानि बाह्योखा भवत्यन्तराणि पशुशीर्षाणि बाह्यानि हि
ान्यन्तरऽआत्मा यदीतरेण यदीतरेणेति ह स्माह शाण्डिल्यः
ैनेव वयं कृत्स्नान्पशून्त्संस्कुर्मऽइति ॥ ४३ ॥ यद्वेवापस्याऽउप-
ाति । प्रजापतेर्विस्रस्तादापऽआयंस्तास्विताश्वविशद्यदविशत्त-
द्विꣳशतिस्ताऽअस्याङ्गुलिभ्योऽध्यस्रवन्नन्तो वाऽअङ्गुलयोऽन्त-
एवास्मात्ताऽआपऽआयन् ॥ ४४ ॥ स यः स प्रजापतिर्व्यस्रꣳ-
। । अयमेव स योऽयमग्निश्चीयतेऽथ याऽअस्मात्ताऽआपऽआय-
तास्ताऽअपस्यास्तद्यदेताऽउपदधाति याऽएवास्मात्ताऽआपऽआयँ-
ाऽअस्मिन्नेतत्प्रतिदधाति तस्मादेताऽअत्रोपदधाति ॥४५॥ "[1]अपां
मन्त्सादयामी"ति । वायुर्वाऽअपामेम यदा ह्येवैषऽइतश्चेतश्च वा-
थापो यन्ति वायौ ताꣳ सादयति ॥४६॥ "[2]अपां त्वोद्मन्त्सादया-
"ति । ओषधयो वाऽअपामोद्म यत्र ह्यापऽउन्दन्त्यस्तिष्ठन्ति तदो-
ग्यो जायन्तऽओषधिषु ताꣳ सादयति ॥४७॥ "[3]अपां त्वा भस्म-
सादयामी"ति । अभ्रं वाऽअपां भस्माभ्रे ताꣳ सादयति ॥ ४८ ॥
[4]अपां त्वा ज्योतिषि सादयामी"ति । विद्युद्वाऽअपां ज्योतिर्विद्युति
ाꣳ सादयति ॥४९॥ "[5]अपां त्वायने सादयामी"ति । इयं वाऽअ-
ामयनमस्याꣳ ह्यापो यन्त्यस्यां ताꣳ सादयति तद्याऽअस्यैतेभ्यो
ेभ्यऽआपऽआयंस्ताऽअस्मिन्नेतत्प्रतिदधात्यथोऽएतान्येवास्मिन्नेत-
ाणि दधाति ॥ ५० ॥ "[6]अर्णवे त्वा सदने सादयामी"ति । प्राणो
ाऽअर्णवः प्राणे ताꣳ सादयति ॥ ५१ ॥ "[7]समुद्रे त्वा सदने साद-
ामी"ति । मनो वै समुद्रो मनसो वै समुद्राद्वाचाभ्र्या देवास्त्रयीं
वेद्यां निरखनंस्तदेष श्लोकोऽभ्युक्तो ये समुद्रान्निरखनन्देवास्तीक्ष्णा-

१—७, मा. सं. १३. ५३.

भिराश्रिभिः सुदेवोऽअथ तद्विद्याद्यत्र निर्व्वपणं दधुरिति मनः समुद्रं वाक्तीक्ष्णाश्रिस्त्रयी विद्या निर्व्वपणमेतदेष श्लोकोऽभ्युक्तो मनसि ताᳬ सादयति ॥ ५२ ॥ "सरिरे त्वा सदने सादयामी"ति । वाग्वै सरिरं वाचि ताᳬ सादयति ॥ ५३ ॥ "अपां त्वा क्षये सादयामी"ति । चक्षुर्व्वाऽअपां क्षयस्तत्र हि सर्व्वदैवापः क्षियन्ति चक्षुषि ताᳬ सादयति ॥ ५४ ॥ "अपां त्वा सधिषि सादयामी"ति । श्रोत्रं वाऽअपाᳬ सधिः श्रोत्रे ताᳬ सादयति तद्याऽअस्यैतेभ्यो रूपेभ्यऽआपऽआयंस्ताऽअस्मिन्नेतत्प्रतिदधात्यथोऽएतान्येवास्मिन्नेतद्रूपाणि दधाति ॥ ५५ ॥ "अपां त्वा सदने सादयामी"ति । द्यौर्व्वाऽअपाᳬ सदनं दिवि ह्यापः सन्ना दिवि ताᳬ सादयति ॥ ५६ ॥ "अपां त्वा सधस्थे सादयामी"ति । अन्तरिक्षं वा अपाᳬ सधस्थमन्तरिक्षे ताᳬ सादयति ॥ ५७ ॥ अपां त्वा योनौ सादयामी"ति । समुद्रो वाऽअपां योनिः समुद्रे ताᳬ सादयति ॥ ५८ ॥ "अपां त्वा पुरीषे सादयामी"ति । सिकता वाऽअपां पुरीषᳬ सिकतासु ताᳬ सादयति ॥ ५९ ॥ "अपां त्वा पाथसि सादयामी"ति । अन्नं वाऽअपां पाथोऽन्ने ताᳬ सादयति तद्याऽअस्यैतेभ्यो रूपेभ्यऽआपऽआयंस्ताऽअस्मिन्नेतत्प्रतिदधात्यथोऽएतान्येवास्मिन्नेतद्रूपाणि दधाति ॥ ६० ॥ "गायत्रेण त्वा छन्दसा सादयामि । त्रैष्टुभेन त्वा छन्दसा सादयामि जागतेन त्वा छन्दसा सादयाम्यानुष्टुभेन त्वा छन्दसा सादयामि पाङ्क्तेन त्वा छन्दसा सादयामी"ति तद्याऽअस्यैतेभ्यश्छन्दोभ्यऽआपऽआयंस्ताऽअस्मिन्नेतत्प्रतिदधात्यथो ऽएतान्येवास्मिन्नेतच्छन्दाᳬसि दधाति ॥ ६१ ॥ ताऽएताऽअङ्गुलयः । ताः सर्व्वतऽउपदधाति सर्व्वतो हीमाऽअङ्गुलयोऽन्तेषूपदधात्यन्तेषु हीमाऽअङ्गुलयश्चतुर्द्धोपदधाति चतुर्द्धा हीमाऽअङ्गुलयः पञ्च पञ्चोपदधाति पञ्च पञ्च

१—८, १० मा. सं. १३. ५३. १. सादयामीति इति ग, ख, भ.

हीमाऽअङ्गुलयो नानोपदधाति नाना हीमाऽअङ्गुलयः सकृत्सकृत्सादयति समानं तत्करोति तस्मात्समानसम्बन्धनाः ॥६२॥ (५.२.)॥

cf. का. श. ६. ५. १-४. तै. सं. ५. २. ६-१०, मै. सं. ७-८. काठ. २०. ८, ६. कपि ३२. १०. ११.

इति माध्यन्दिनीये शतपथब्राह्मणे हस्तिघटनाम
सप्तमं काण्डं समाप्तम् ॥ ७ ॥

चतुर्थः प्रपाठकस्समाप्तः ॥

( कण्डिकासंख्या १०० )

( पञ्चमोऽध्यायः )

( अस्मिन्काण्डे कण्डिकासंख्या ३९८ ॥ )

( ब्राह्मणसंख्या १२ )

प्राप्तिस्थानम्—
जयकृष्णदास—हरिदास गुप्तः,
चौखम्बा संस्कृत सीरिज़ आफिस,
विद्याविलास प्रेस, बनारस सिटी ।

# शुद्धिपत्रम्

| अशुद्धम् | शुद्धम् | पंक्तिः पृ |
|---|---|---|
| त्यतत्. | स्येतत्. | ५. ५१ |
| यथैवान्दो | यथैवादो | ६. ५१ |
| व्यय ९ | व्ययं९ | २३. ५२ |
| देवा स्या- | देवास्या. | १३. ५४ |
| द्रा यस्पो- | द्रायस्पो. | ५. ५५३ |
| दश माते | दशे माते | ६. ५५३ |
| राज्या ॐ | राज्यामिति अ. | १२. ५७० |
| वाहनामि. | वाहनामि. | २०. ५७१ |
| शामयति. | शमयति | १३. ५७२ |
| त्वापदधाति | त्वोपदधाति. | १. ५८८ |
| अनिच्छं विद्वान् | अनित्यं विद्वान् भा. सं. पा. | ५. ५८९ |
| करोत्यं | करोत्स्ये | १३. ५८८ |
| सम्रंथस्तमं | सप्रथस्तमं | १९. ६०३ |
| छन्दाभिः | छन्दोभिः | ४. ६०४ |
| यैवेषु | यैवैषु. | ४. ६१४ |
| ह्यवैता | ह्यवैता. | १३. ६१९ |